University of Mysore

Oriental Library Publications

SANSKRIT SERIES No. 84

GENERAL EDITOR

H R RANGASWAMY IYENGAR, M A,

*Curator-in-charge, Government Oriental Library, Mysore*

श्रीमदुमास्वामिविरचितम्

# तत्त्वार्थसूत्रम्

श्रीभास्करनन्दिविरचितसुखबोधाख्यवृत्तियुतम्

# THE TATTVARTHA SUTRA

OF

SRI UMĀSWĀMI

WITH

THE SUKHABODHA OF SRI BHĀSKARANANDI

EDITED BY

PANDIT A. SHANTIRAJA SASTRI

*Govt Oriental Library, Mysore*



MYSORE

PRINTED BY THE ASST SUPDT AT THE GOVT. BRANCH PRESS

1941

# PREFACE

JAIN Classics in old Kannada like the Ādipurāṇa and the Anantanātha Purāṇa on the life stories of the Jain Tīrthankaras, Ṛṣabha and Anantanātha, and works like Dharmāmṛta have no doubt been edited and published by the Oriental Library, Mysore. But no Sanskrit text dealing exclusively with the Philosophy and Religion of the Jains, has been brought out by the Library during the last 53 years of its existence. But thanks to Pandit A. Shantiraja Sastry, the Travelling Pandit of the Library, it has been possible to bring out an edition of the Sanskrit Text "Tattvārtha Sūtra" with an unpublished commentary, *Sukhabōdha* by Bhāskaranandin. This is a work which is regarded as sacred and authoritative by both the Jaina sects—the Śvetāmbaras and the Digambaras.

The author of the *Tattvārtha Sūtra* or *Tattvārthadhigama Sūtra*, as it is called, is the celebrated teacher, Umāsvāmi or Umāsvāti, who is said to have lived, according to the Digambara Pattāvali, between 135 and 219 A.D. According to tradition, Umāsvāti is a pupil of Kundakundāchārya and is cited with esteem by the followers of both the sects. He is also known by the epithets, *Gṛdhrapincha* and *Nirgrantha*, and is said to have written no less than 500 books. But the most important of them is the work now before us which he wrote in Pātalīputra. There is a story which goes to say that a layman called Dvaipāyaka lived in Gujrat and was anxious to do service to his Religion and Philosophy by writing a book on Jainism. The theme he chose for his book was Mōkṣa or liberation. He made a vow not to take his meal for the day unless he wrote at least one aphorism. He started the work with the first Sūtra "दर्शनज्ञानचारित्राणि मोक्षमार्गः" and left his home on some special business. By accident, a saint came to his house just at that time, prefixed the word "Samyak" to the

first word of the Sūtra and departed. Dvaipāyaka came home and learnt from his mother what had happened during his absence and ran in search of the mysterious hand that wrote the word. He was fortunate enough to meet the saint at the outskirts of the city and entreated him to complete the work. The saint, moved by compassion, agreed and finished the work. The saint was none other than Umāsvāti.

*Tattvārtha Sūtra* is a Sanskrit manual in ten chapters on the " Understanding of the true nature of things." The large number of commentaries, no less than 30, as we know, that have appeared on the work by teachers of both the sects is ample proof of the popularity of the work among the Jains. It is read and recited, even at the present day, by the Jains both in their houses and temples. It is almost the Bible of the Jains. By reading the book, once through, one is said to acquire just as much religious merit as by fasting one day :—

दशाध्याये परिच्छिन्ने तत्त्वार्थे पठिते सति ।
फलं स्यादुपवासस्य भाषितं मुनिपुङ्गवैः ॥

It is the earliest systematic work we have on Jaina " Logic, Psychology, Cosmography, Ontology and Ethics." The contents of the book have been summarised by the learned editor in the Sanskrit introduction.

Of the several commentators on the work, Samantabhadra, Pūjyapāda and Akalanka deserve special mention. Samantabhadra is the earliest commentator of the Digambara school and is said to have written a learned and voluminous commentary, *Gandhahasti Mahābhāshya*, on the Sutra. Unfortunately this commentary seems to have been irretrievably lost.

Next to him in the line of commentators, is Pūjyapāda, whose work *Sarvārtha Siddhi* is well-known to scholars. He is a prolific writer and has written books on Grammar, Logic, Prosody, and Philosophy. He is undoubtedly later than Samantabhadra since he refers to him in one of his works as, "चतुष्टयं समन्तभद्रस्य" and is said to have lived, according to the Jain tradition, in the latter part of the 4th century A. D.

The commentator Akalanka is held in high esteem by the Jains. His commentary, *Tattvārtharāja Vārtika*, is a master-piece and abounds in quotations from Buddhist works, especially from the works of Diṅnāga. He is generally assigned by scholars to the end of the 7th century A. D.

The commentary, *Sukhabōdha*, which is now presented to the public for the first time, is by Bhāskaranandin. Its publication was undertaken at the request of many Jain scholars. It is distinguished by its simplicity of style and the clearness of exposition of the deep and hidden significance of the cryptic sūtras of Umāsvāti. It abounds in quotations from the *Rājavārtika* of Akalanka and will surely be a useful aid in understanding the full import of the writings of that great scholar.

Very little is known of the life and times of Bhāskaranandin. From the colophon at the end of each chapter of the work, it is clear that he was a pupil of one Jinachandra Bhattāraka. Since there are several Jain Achāryas of that name, nothing definite can be said as to whose pupil he was. But this much can be said with certainty that the teacher of Bhāskaranandin was the same Jinachandra Bhattāraka as is referred to in the Śravanabelgola Inscription No. 69 and was the pupil of Sarvasādhumuni and not of Chandinandi Muni mentioned in the *Śānti Purāṇa* of the Kannada poet, Ponna. Bhāskaranandin may have flourished in the latter part of the 13th or the beginning of the 14th century A. D.

The present edition of the text and the commentary is based on three manuscripts which have been described in the Sanskrit introduction. I take this opportunity to express the indebtedness of the Library to Pandit Śrī Brahmasuri Sastri of Śravanabelgola and Srī Jñānēśvara Pandit of Chamarajnagar who have readily responded to our requests for the loan of manuscripts for collation.

MYSORE, *1-5-1944.*

H. R. RANGASWAMY IYENGAR,
*Curator-in-charge, Oriental Library, Mysore.*

# प्रस्तावना

न्याय-वैशेषिक साङ्ख्य-सौगत-वेदान्त-मीमांसादिमतविशङ्कटेऽस्मिन्सुविदिते भारतवर्षे सम्भूतमार्हतमतमपि सुप्राचीनमित्यनल्पैः प्रमाणनिकरैर्निश्चितमेव विद्वद्भिः। अस्यार्हतमतस्यैव जैनमतमिति नामान्तरम्। [1]कालगत्या जनताया धारणाशक्तेर्हीयमानदशां वीक्ष्य तत्तत्कालिकविपश्चितः स्वस्वमतबहुलविषयान् [2]संगृह्य सङ्क्षिप्य च जनतासौकर्यार्थं स्वीयमतग्रन्थान् बहून्व्यरचयन्नित्यत्र न स्यात्कस्यापि विसंवादः। नेयं कालगतिर्जैनानत्याक्षीत्। जैना अप्यनुसृत्यैवैनां तत्तदातनास्तदा तदा स्वमतगहनबहुलविषयान् संगृह्य ग्रन्थान्व्यरचयन्नित्यधः प्रदर्श्यमानगुरुपरम्परयाऽवगम्येत॥

जैनसिद्धान्ते उत्सर्पिण्यवसर्पिणीकालभेदौ प्रतिपादितौ। द्वावपि तावनादिप्रवर्तनशीलौ प्रत्येकं दशकोटीकोटिसागरोपमौ। प्रत्येकमनयोरूपभेदाः षोढा--उत्सर्पिण्यास्ते भेदा अतिदुष्षमा, दुष्षमा, दुष्षमसुषमा, सुषमदुष्षमा, सुषमा, अतिसुषमा इति। अवसर्पिण्यामिमे एव भेदा व्यत्यस्तरूपेण प्रवर्तन्तेऽतिसुषमामारभ्य। एवमुक्तेषु कालभेदेषूत्सर्पिण्यास्तृतीयभेदेऽवसर्पिण्याश्चतुर्थभेदे च दुष्षमसुषमाभागे प्रत्येकं चतुर्विंशति तीर्थङ्करा यथाक्रममुत्पद्यन्ते। ते तीर्थङ्कराः केवलिनो जिनाः [3]सर्वज्ञा

---

[1] दोषाद्दुष्षमकालस्य प्रहास्यन्ते धियो नृणाम्।
तासां हानेः पुराणस्य हीयते ग्रन्थविस्तरः॥ १३६॥
—आदिपुराणस्य द्वितीयपर्वणि भगवज्जिनसेनाचार्यः.

[2] विस्तरेणोपदिष्टानामर्थानां तत्त्वसिद्धये।
समासेनाभिधानं यत्सङ्ग्रहं तं विदुर्बुधाः॥

[3] यः सर्वाणि चराचराणि विविधद्रव्याणि तेषां गुणान्
पर्यायानपि भूतभाविभवतः सर्वान् सदा सर्वथा।
जानीते युगपत्प्रतिक्षणमतः सर्वज्ञ इत्युच्यते
सर्वज्ञाय जिनेश्वराय महते वीराय तस्मै नमः॥

वीतरागा इत्यप्युच्यन्ते । "अनेकविषमभवगहनगमनहेतून् दुर्जयकर्मारातीन् जयतीति जिनः" इति जिनशब्दस्य व्युत्पत्तिः । जिनो येषां देवता ते जैनाः । तीर्थङ्करजिना एवान्यूनमनतिरिक्तं सदातनं जैनमतं तत्तत्काले प्रवर्तयन्ते ; न तु स्थापयन्ति । विषयभेदेन जिनानामुपदेशः [1] प्रथमानुयोग, करणानुयोग, चरणानुयोग, द्रव्यानुयोग इति चतुर्धा भिद्यते । तेऽनुयोगा अप्याचाराङ्ग, सूत्रकृदङ्ग, स्थानाङ्ग, समवायाङ्ग, व्याख्याप्रज्ञप्त्यङ्ग, ज्ञातृधर्मकथाङ्ग, उपासकाध्ययनाङ्ग, अन्तकृद्दशाङ्ग, अनुत्तरौपपादिकदशाङ्ग, प्रश्नव्याकरणाङ्ग, विपाकसूत्राङ्ग, दृष्टिवादाङ्गमिति द्वादशधा भिद्यन्ते । अनादिपरम्परायातत्वेन कथञ्चिदपौरुषेयाणीमान्यङ्गानि । तत्तत्कालविशेषे क्षेत्रविशेषे च परापरपरमेश्वरप्रकाशितत्वेन कथञ्चित्पौरुषेयाणीत्युच्यन्ते ॥

तत्राचाराङ्गे मुनीनामाचारः प्रत्यपादि । सूत्रकृदङ्गे व्यवहारधर्मः स्वमतपरमतस्वरूपं च सूत्ररूपेण ग्रथितम् । स्थानाङ्गे जीवपुद्गलादिवस्तूनां भेदप्रभेदा उपवर्णिताः । समवायाङ्गे जीवादिपदार्थानां येन रूपेण सादृश्यमस्ति तन्निरूपितम् । व्याख्याप्रज्ञप्त्यङ्गे जीवोऽस्ति वा? न वा? स च वक्तव्यः? आहोस्विदवक्तव्यः? नित्यो वा? अनित्यो वा? एको वा? अनेको वा? इत्यादिप्रश्नपूर्वकं जीवो व्युत्पादितः । ज्ञातृधर्मकथाङ्गे जीवादिवस्तूनां स्वभावस्तीर्थङ्कराणां महिमा तेषां दिव्यध्वनेः समयस्तस्य च

---

[1] प्रथमानुयोगमर्थाख्यानं चरितं पुराणमपि पुण्यम् ।
बोधिसमाधिनिधानं बोधति बोधः समीचीनः ॥
लोकालोकविभक्तेर्युगपरिवृत्तेश्चतुर्गतीनां च ।
आदर्शमिव तथामतिरवैति करणानुयोगं च ॥
गृहमेध्यनगाराणां चारित्रोत्पत्तिवृद्धिरक्षाङ्गम् ।
चरणानुयोगसमयं सम्यग्ज्ञानं विजानाति ॥
जीवाजीवसुतत्त्वे पुण्यापुण्ये च बन्धमोक्षौ च ।
द्रव्यानुयोगदीपः श्रुतविद्यालोकमातनुते ॥

——रत्नकरण्डश्रावकाचारे श्रीसमन्तभद्रः.

महिमा उत्तमक्षमादिधर्माणां स्वरूपं सम्यग्दर्शनज्ञानचारित्राणां स्वरूपं गणधरदेवेन्द्रचक्रवर्त्यादीनामुपकथाश्च व्याख्याताः । **उपासकाध्ययनाङ्गे** श्रावकाणा[1]मेकादशस्थानस्वरूपं व्रतगुणशीलाचारादिक्रियाकाण्डस्वरूपं मन्त्राणि च कथितानि । **अन्तकृद्दशाङ्गे** तीर्थङ्कराणामन्तरकाले प्रत्येकं दशमुनयो घोरोपसर्गं सोढ्वा संसारस्यान्तं प्राप्ता इति निरूपिताः । **अनुत्तरौपपादिकदशाङ्गे** तीर्थङ्कराणामन्तरकाले प्रत्येकं प्रादुर्भवतामन्येषामपि दशमुनीनां वर्णनं तेष्वुपसर्गं सोढ्वा समाधिविधिना मृत्वा विजयवैजयन्तजयन्तादिपञ्चानुत्तरविमानेषूत्पद्यन्त इत्युपगीताः । **प्रश्नव्याकरणाङ्गे** दूतवाक्यनष्टमुष्टिचिन्ताद्यनुयोगमुखेन धनधान्यादिलाभालाभौ सुखदुःखजीवनमरणजयपराजयादिविषया उपदिष्टाः । **विपाकसूत्राङ्गे** द्रव्यक्षेत्रकालभावानुसारेण शुभाशुभकर्मणां तीव्रमन्दमध्यमादिभेदैः फलानुभववर्णनमुपलभ्यते । **दृष्टिवादाङ्गे** मिथ्यामतानां निरूपणं तेषां खण्डनं च सम्पादितम् ॥

तत्रान्तिमे दृष्टिवादाङ्गे परिकर्म, सूत्र, प्रथमानुयोग, पूर्वगत, चूलिका इति पञ्चभेदा विद्यन्ते । तत्र परिकर्मणि चन्द्रप्रज्ञप्तिः, सूर्यप्रज्ञप्तिः जम्बूद्वीपप्रज्ञप्तिः, द्वीपसागरप्रज्ञप्तिः, व्याख्याप्रज्ञप्तिश्चेति पञ्च प्रभेदास्सन्ति । चन्द्रप्रज्ञप्ताविन्दोस्सूर्यप्रज्ञप्तौ रवेश्चायुःपरिमाणगमनवैभवा व्याख्याताः । जम्बूद्वीपप्रज्ञप्तौ निखिलक्षेत्राणि मेर्वादिभूधराश्च वर्णिताः । द्वीपसागरप्रज्ञप्तौ द्वीपानामुदधीनां च वर्णनं विद्यते । व्याख्याप्रज्ञप्तौ जीवाजीवादिद्रव्याणां रूपित्वारूपित्वादिकं विवृतम् ॥

दृष्टिवादाङ्गस्य द्वितीयभेदे सूत्रे जीवस्य कर्मकर्तृत्वे तत्फलभोक्तृत्वे च स्वातन्त्र्यमव्यापकत्वमनणुपरिमाणत्वं पृथिव्यादिपञ्चभूतानुत्पत्त्यादि च विवेचितम् ॥

---

[1] दंसणवदसामायियपोसहसचित्तरायिभत्तो य ।
बम्हारम्भपरिग्गह अणुमणुमुद्दिट्ठदेसविरदेदे ॥
—गोमटसारे नेमिचन्द्राचार्यः.

तस्य तृतीयभेदे प्रथमानुयोगे चतुर्विंशतितीर्थङ्कराणां द्वादशचक्रवर्तिनां नवबलदेवानां नवकेशवानां नवप्रतिकेशवानां त्रिषष्टिशलाका पुरुषाणां पुराणमितरेषां पुण्यपुरुषाणां चरितं चोपन्यस्तम् ॥

तस्य तुरीयभेदे पूर्वगते उत्पादपूर्वं, आग्रायणीयपूर्वं, वीर्यानुवादपूर्वं, अस्तिनास्तिप्रवादपूर्वं, ज्ञानप्रवादपूर्वं, सत्यप्रवादपूर्वं, आत्मप्रवादपूर्वं, कर्मप्रवादपूर्वं, प्रत्याख्यानपूर्वं, विद्यानुवादपूर्वं, कल्याणवादपूर्वं, प्राणावायपूर्वं, क्रियाविशालपूर्वं, लोकबिन्दुसारपूर्वा इति चतुर्दशभेदा वर्तन्ते। तत्रादिमे पूर्वे जीवादिद्रव्याणामुत्पादव्ययध्रौव्यत्वधर्माः कथिताः। आग्रायणीयपूर्वे पञ्चास्तिकायषड्द्रव्यसप्ततत्त्वनवपदार्थानां द्रव्यार्थिकपर्यायार्थिकादिनयानां च निरूपणं विद्यते। वीर्यानुवादपूर्वे चक्रधरदेवेन्द्रधरणेन्द्रतीर्थङ्करादिपुराणपुरुषाणां शक्तिमहिमावर्णनमकारि। अस्तिनास्तिप्रवादपूर्वे जीवपुद्गलधर्माधर्माकाशकालानामास्तित्वनास्तित्वधर्मयोश्चानेकविकल्पैर्निरूपणं निर्व्यूढम्। ज्ञानप्रवादपूर्वे मतिज्ञानश्रुतज्ञानावधिज्ञानमनःपर्ययज्ञानकेवलज्ञानानां कुमतिज्ञानकुश्रुतज्ञानविभङ्गज्ञानानां चोदयकारणान्याश्रयाश्च व्युत्पादिताः। सत्यप्रवादपूर्वे वाग्गुप्तेः कण्ठताल्वादिवागुत्पत्तिस्थानानां वाग्योग्यताप्राप्तद्वीन्द्रियत्रीन्द्रियादिप्राणिनां शुभाशुभवचनप्रयोगानां च वर्णनं विहितम्। आत्मप्रवादपूर्वे आत्मनो ज्ञानमयत्वसुखमयत्वकर्तृत्वभोक्तृत्वादिधर्मा निरूपिताः। कर्मप्रवादपूर्वे कर्मणां बन्धोदयोदीरणोपशमनिर्जरादिविषयाः संगृहीताः। प्रत्याख्यानपूर्वे द्रव्यपर्यायाणां भोगोपभोगवस्तुत्यागविधेरुपवासादिव्रतानां च विशेषा उपन्यस्ताः। विद्यानुवादपूर्वे क्षुद्रविद्यानां रोहिण्यादिमहाविद्यानां मन्त्रतन्त्रविधानानामष्टाङ्गनिमित्तानां च स्वरूपं विवृतम्। कल्याणवादपूर्वे तीर्थङ्करचक्रधरबलदेवकेशवप्रतिकेशवादीनामभ्युदयः प्रख्यापितः। प्राणावायपूर्वे प्राणापानवाय्वोरायुर्वेदमन्त्रवादगारुडवादानां च भेदो विबोधितः। क्रियाविशालपूर्वे सकलकलानां छन्दोलङ्काराणां च

विषया उदाहृताः । लोकबिन्दुसारपूर्वे त्रिलोकोदरवर्तिनिखिलसारवस्तुषु सारतमस्य मोक्षसुखस्य साधनानुष्ठानादीन्युपवर्णितानि ॥

दृष्टिवादाङ्गस्य पञ्चमायां चूलिकायां जलगता, स्थलगता, मायागता, रूपगताऽऽकाशगता इति पञ्चभेदाः प्ररूपिताः । तत्र जलगतायां जलगमन-जलस्तम्भनादीनां कारणभूतमन्त्रतन्त्रतपांसि उदाहृतानि । स्थलगतायां भूगमन-हेतुभूतमन्त्रतन्त्रादीनां वास्तुविद्यायाश्च निरूपणं विद्यते। मायागतायामिन्द्रजाल-महेन्द्रजालादिक्रियाणां वर्णनं वर्तते । हरिणसिंहव्याघ्रादिरूपेण रूपपरिवर्तनस्य हेतुभूतमन्त्रतन्त्राणां चित्रकर्मरसायनादिविधीनां च समाहारः सम्पादितः रूपगतायाम् । गगनगमनस्य हेतुभूतमन्त्रतन्त्रतपसां निरूपणमाकाशगतायां विद्यते ॥

उपर्युक्तद्वादशाङ्गपरमागमेषु पञ्चाधिकाष्टापञ्चाशत्सहस्रत्र्यशीतिलक्षद्वादशोत्तरशतकोटिपदानि[1] सन्ति । तथा चाङ्गबाह्यश्रुतं सामायिकं, चतुर्विंशतिस्तवः, वन्दना, प्रतिक्रमणं, वैनयिकं, कृतिकर्म, दशवैकालिकं, उत्तराध्ययनं, कल्प्यव्यवहारः, कल्प्याकल्प्यं, महाकल्प्यं. पुण्डरीकं, महापुण्डरीकं, अशीतिकं चेति चतुर्दशधा विराजते । अङ्गानामङ्गबाह्यानां चैषां विस्तृतवर्णनमुपलभ्यते गोमटसारजीवकाण्डभागे ॥

अस्मिन्नवसर्पिणीयुगे परमागमानाममीषां प्रवक्तृषु तीर्थङ्करेष्वन्तिमो भगवान्महावीरः । सम्प्रति तस्य निर्वाणाब्दविषये मतभेदो दरीदृश्यते । किञ्चित्तं विचारयामः—

दिगम्बरजैनसम्प्रदायानुसारेणास्य महावीरनिर्वाणाब्दस्य विमर्शने क्रियमाणे सत्यध उल्लिख्यमानप्रमाणसन्दोहैर्वक्ष्यमाणो निष्कर्षः समुपजायते । तथा हिः—

---

[1] कोटीनां द्वादशशतमष्टापञ्चाशतं सहस्राणाम् ।
लक्षत्र्यशीतिमेव च पञ्च च वन्दे श्रुतपदानि ॥ २२ ॥

—श्रुतभक्तिः.

गोमटसारादिग्रन्थकर्त्रा श्रीमन्नेमिचन्द्रसिद्धान्तचक्रवर्त्याचार्येण विरचिते त्रिलोकसारग्रन्थे समस्तीयं गाथा—

पणछस्सदवस्सं पणमासजुदं गमिय वीरणिव्वुइदो ।
सगराजो तो कक्की चदुणवतियमहियसत्तमासं ॥ ८५० ॥

(छाया)

पञ्चषट्छतवर्षं पञ्चमासयुतं गत्वा वीरनिर्वृतेः ।
शकराजस्ततः कल्की चतुर्णवत्रिकमधिकसप्तमासम् ॥ ८५० ॥

महावीरनिर्वृतेः पश्चात्पञ्चमासोपेतपञ्चोत्तरषट्छतवर्षानन्तरं शकराजोत्पत्तिस्ततस्सप्तमासाधिकचतुर्णवत्युत्तरत्रिशतवर्षानन्तरं (महावीरनिर्वृतेः सहस्रवर्षानन्तरं) कल्क्युत्पत्तिरित्यस्या गाथाया भावार्थः ॥

विक्रमनृपाब्दादष्टापञ्चाशद्वर्षानन्तरं क्रिस्ताब्दारम्भः । तस्मादष्टसप्ततिवर्षानन्तरं शालिवाहनशकारम्भश्च भवति । विक्रमनृपाब्दस्य शालिवाहनशकाब्दस्य चास्ति पञ्चत्रिंशदधिकशत (१३५) वर्षाणामन्तरम् । विक्रमनृपाब्दः "संवत्" इति, शालिवाहननृपाब्दः "शक" इति च व्यवह्रियते यत्र कुत्रचित् । कर्णाटकजनपदे तु महावीरशकः, विक्रमशकः, क्रिस्तशकः, शालिवाहनशक इति सर्वत्र संयुक्तो व्यवह्रियते शकशब्दः । प्रचलत्यधुना—स्वभानुसंवत्सरे वर्तमानविक्रमशक एकाधिकद्विसहस्रतमः (२००१), क्रिस्तशकस्त्रिचत्वारिंशदधिकनवशतोत्तरसहस्रतमः (१९४३), शालिवाहनशकष्षट्षष्ठ्यधिकाष्टशतोत्तरसहस्रतमः (१८६६) ॥

उपर्युक्तगाथागत "सगराजो—शकराज" शब्दस्य विक्रमनृपार्थाभ्युपगमे अधुना समुपनमति महावीरनिर्वाणशकः (कार्तिकामावास्यापर्यन्तं) षडधिकषट्शतोत्तरद्विसहस्रतमः (२६०६) । गाथोल्लिखितशकराजशब्दस्य विक्रमनृपार्थ एव दिगम्बरजैनसम्प्रदायावलम्बिभिः प्रत्नैस्सुधीभिः परि-

गृहीतोऽतः स एव परिग्राह्य इत्यधो विलख्यमानप्रमाणसन्दोहैः दृढीभवति । तथा हि—

१. रैस्महाशयेन सम्पादितश्रवणबेलुगुळशासनपुस्तकस्य प्रस्तावनाया दशमपृष्ठे—

"Vîra Vardhamâna, after a ministry of 30 years obtained nirvana in the pleasure garden of Pavapura on the 30th of the month Âsvija, in the year Kâlayukti, 2438 years of the Kaliyuga having passed"

इत्यस्ति समुल्लेखः ॥

अत्र हिन्दुमतानुसारेण कलियुगाब्दसङ्ख्या समुपदर्शितेति ज्ञातव्या ॥

२. तदुपरि तेनैव—रैस्महाशयेन तस्मिन्नेव पृष्ठे—

"There was born Vikramáditya in Ujjayini; and he, by his knowledge of astronomy, having made an almanac, established his own era from the year Rudhirodgâri, the 605th year after the death of Vardhamâna—

तदा उज्जयिन्यां विक्रमादित्यो जातः । स च स्वीयज्योतिषज्ञानेन पञ्चाङ्गमेकमारचय्य वर्धमान—तीर्थङ्करमुक्तिगमनानन्तरं पञ्चोत्तरषट्शतवर्षेभ्यः पश्चात् रुधिरोद्गारिसंवत्सरे स्वीयशकाब्दमारेभे" इति प्रतिपादितम् ॥

३. ततस्तेनैव महाशयेन तस्मिन्नेव पृष्ठे याकोबिमहाशयस्योल्लेखनमिदमुद्धृतम् । यथा—

"Jacobi says—The traditional date of Mahâvira's nirvana is 170 years before Vikrama according to the Svêtambaras and 605 according to the Digambaras—

याकोबिः कथयति—श्वेताम्बरजैनाम्नायानुसारेण विक्रमादित्यात्सप्तत्युत्तरचतुश्शतवर्षेभ्यः पूर्वं महावीरो मुक्तिमाप । दिगम्बरजैनाम्नायानुरोधेन पञ्चवर्षाधिकषट्शतवर्षेभ्यः पूर्वं मुक्तिमलभत" ॥

४. चामराजनगरवासिना श्रीब्रह्मसूरिपण्डिततनूभुवा ज्ञानेश्वरपण्डितेन संगुणिते जैनपञ्चाङ्गे वर्तमानमहावीरनिर्वाणाब्दो २६०६तमः संवत्सर एव समुपदर्शितो भाति ॥

५. इतः स्वभानुसंवत्सरारम्भात्सप्तसप्ततिवर्षेभ्यः पूर्वं कनकगिरिनिवासिना कमलपण्डितेन विरचिता रत्नकरण्डश्रावकाचाराख्यास्या सुखबोधिन्याख्या समुपलभ्यते । तत्र वीरनिर्वाणाब्दसूचकाः केचन श्लोकाः परिदृश्यन्ते । यथा—

"श्रीपतौ श्रीमहावीरे सन्मतौ तीर्थनायके ।
मुक्तिलक्ष्म्याश्रितेऽब्दानामेकोनत्रिंशता सह ॥
शतैः पञ्चभिराश्लिष्टे सहस्रद्वितये गते (२५२९) ।
शालिवाहनसंज्ञश्रीशकराजशरद्गणे ॥
वसुदिग्गजशैलेन्दु (१७८८) प्रमितेऽक्षयवत्सरे ।
चैत्रे मासे शुभे कृष्णे पक्षेऽष्टम्यां तिथौ रवेः ॥
वासरे वासराधीशे पूर्वादिग्वनिताधरम् ।
शनैश्चुम्बति भे पूर्वाषाढे च शिवयोगके ॥"

उपर्युक्तश्लोकोल्लिखित २५२९ वर्षेषु सप्तसप्ततिवर्षाणां सम्मेलने सति वीरनिर्वाणाब्दसङ्ख्याऽधुना २६०६ वर्षप्रमिता सञ्जायते ॥

६. "जैनगजेट्" समाख्याया हिन्दीवार्तापत्रिकाया अष्टचत्वारिंशद्वर्षीयचतुर्विंशतितमे अङ्के श्रीमहावीरनिर्वाणाब्दसूचकोऽयमुल्लेखः समुपलभ्यते । यथा—

"श्रीमहावीरशाकाब्द २६०५ मधुमाससे (चैत्रसे) दीपावलीके पूर्वदिवस तक १८६५ शाकाब्दके साथ साथ समान रहता है । दीपावलीसे महावीरशाकाब्द २६०६ प्रारम्भ होता है और वह शाकाब्द १८६६ के साथ चैत्रमें समान होता है । दीपावलीसे चैत्र तक दोनों विषम रहते है ।

आगामी फाल्गुन तक शाकाब्द १८६५ रहेगा। किन्तु श्रीमहावीर-शाकाब्द २६०६ रहेगा। अतः गङ्गपण्डितके गङ्गप्रकाशानुसार श्रीमहावीरनिर्वाणशाकाब्द वर्तमानमें २६०६ मानना उचित है।"

७. रैस्महाशयेन सम्पादितश्रवणबेळुगुळशासनपुस्तके क्रोडीकृतमेकचत्वारिंशदुत्तरशततमं शासन (दानपत्र) मितः पूर्वं त्रयोदशोत्तरशततमेऽब्दे (त्रिंशदधिकाष्टशतोत्तरसहस्रतमे क्रिस्ताब्दे) तृतीयकृष्णराजेन समुल्लेखयितं वरीवर्ति यस्मिन्निमे वक्ष्यमाणाः श्लोका दरीदृश्यन्ते—

" नानादेशनृपालमौलिविलसन्माणिक्यरत्नप्रभा-
भास्वत्पादसरोजयुग्मरुचिरः श्रीकृष्णराजप्रभुः।
श्रीकर्णाटकदेशभासुरमहीशूरस्थसिंहासनः
श्रीचामक्षितिपालसूनुरवनौ जयात्सहस्रं समाः॥ २॥
स्वस्तिश्रीवर्धमानाख्ये जिने मुक्तिं गते सति।
वह्निरन्ध्राब्धिनेत्रैश्च (२४९३) वत्सरेषु मितेषु वै॥ ३॥
विक्रमाङ्कसमास्विन्दुगजसामजहस्तिभिः (१८८८)।
सतीषु गणनीयासु गणितज्ञैर्बुधैस्तदा॥ ४॥
शालिवाहनवर्षेषु नेत्रबाणनगेन्दुभिः (१७५२)।
प्रमितेषु विकृत्यब्दे श्रावणे मासि मङ्गले॥ ५॥"

इत्यादयः। श्लोकैरेतैरुल्लिखिता महावीरनिर्वाणाब्दविक्रमाङ्काब्दशालिवाहनाब्दाः शकराजशब्दस्य विक्रमनृपार्थमेव दृढीकुर्वन्ति। महावीरनिर्वाणाब्दस्य त्रिनवत्यधिकचतुश्शतोत्तरद्विसहस्रतमस्य (२४९३) श्लोकोक्तस्य तद्दानपत्रोत्पत्तिवर्षादारभ्याद्य यावत्त्रयोदशाधिकशतसंवत्सराणां संयोजने कृते सति सम्प्रति वीरनिर्वाणाब्दः षडधिकषट्शतोत्तरद्विसहस्रतमः (२६०६) समायाति। विक्रमाङ्काब्दस्याष्टाशीत्यधिकाष्टशतोत्तरसहस्रतमस्य (१८८८) तैस्त्रयोदशाधिकशतसंवत्सराणां संयोजने कृते सति सम्प्रति विक्रमाङ्काब्द एकाधिकद्विसहस्रतमः (२००१) समायाति॥

८. केषाञ्चिदियमस्ति धारणा या शालिवाहनशब्देन साकमेव शकशब्दः संयुज्यते सङ्घटते च न तु विक्रमार्कशब्देनेति, सा अविचारितरमणीयेति प्रमाणनिकरैरुपर्युल्लिखितैरधोविलिख्यमानाऽकलङ्कचारितगतेनानेन श्लोकेन च सुस्पष्टं भवति—

" विक्रमार्कशकाब्दीयशतसप्तप्रमाजुषि ।
कालेऽकलङ्कयतिनो बौद्धैर्वादो महानभूत् ॥ "

९. त्रिलोकसारग्रन्थस्य पण्डितटोडरमल्लविरचितहिन्दीटीकायां पूर्वोदितगाथान्तर्गतशकराजशब्देन विक्रमराजार्थ एव परिगृहीतो यथा—

" श्रीवीरनाथचौवीसवां तीर्थङ्करको मोक्षप्राप्तहोनेतै पीछै छसै पाञ्चवर्ष पाञ्चमाससहित गए विक्रमनाम शकराज होहै । बहुरि तातै उपरि च्यारि नव तीन इन अङ्कनिकरि तीनसै चौराणवै वर्ष अर सात मास अधिक गए कल्की होहै । "

१०. माधवचन्द्रत्रैविद्यदेवविरचितसंस्कृतटीकायामपि पूर्वोक्तगाथागतशकराजशब्देन विक्रमनृपार्थ एव समुपात्तो यथा—

" श्रीवीरनाथनिर्वृतेः सकाशात् पञ्चोत्तरषट्शतवर्षाणि पञ्चमासयुतानि गत्वा पश्चात् विक्रमाङ्कशकराजोऽजायत । तत उपरि चतुर्णवत्युत्तरत्रिशतवर्षाणि सप्तमासाधिकानि गत्वा पश्चात्कल्की अजायत " ॥

एतैरुपर्युक्तप्रमाणैः षडधिकषट्शतोत्तरद्विसहस्रतम (२६०६) एव सम्प्रति श्रीमहावीरनिर्वाणाब्दस्तथ्यतामाप्नोतीति विज्ञायते । श्वेताम्बरजैनास्तु शकराजशब्दस्य शालिवाहन एव वाच्य इति मत्वा सम्प्रति श्रीमहावीरनिर्वाणाब्दो नवषष्ट्यधिकचतुश्शतोत्तरद्विसहस्रतम (२४६९) इति प्रतिपादयन्ति तेषां तित्थोगालिपहन्नय विचारश्रेणीत्यादिग्रन्थप्रमाणैः । नैतन्मतं मान्यं दिगम्बरजैनानामिति निश्चप्रचमुपर्युक्तैः प्रमाणनिवहैः । अत अनेकान्तपत्रिकायाश्चतुर्थवार्षिकदशमकिरणे " वीरनिर्वाणसंवत्सरसमालोचना " इति

यल्लेखनं प्रकाशितं तत्साकल्येनासमालोच्य विलिखितमिति विदांकुर्वन्तु विदांवराः ॥

भगवद्वीरनिर्वाणानन्तरं तस्य शिष्या गौतम, सुधर्म, जम्बूस्वामिकेवलिनस्त्रयो यथाक्रमं १२, १२, ३८=६२ वर्षपर्यन्तं द्वादशाङ्गपरमागममुपदिश्य निर्वृतिमापुः । न तत्पश्चादस्मिन्भरतक्षेत्रे केवलिनामुदयस्समभूत् । ततो विष्णु, नन्दिमित्र, अपराजित, गोवर्धन, भद्रबाहु (प्रथम) इत्येते पञ्च मुनयः श्रुतकेवलित्वं सम्पाद्य यथाक्रमं १४, १६, २२, १९, २९=१०० वर्षपर्यन्तं द्वादशाङ्गपरमागममुपदिदिशुः । तेषां कालानन्तरमिह श्रुतकेवलिनामपि प्रादुर्भावाभावस्समजनि । तदनन्तरं विशाख, प्रोष्ठिल, क्षत्रिय, जयसेन, नागसेन, सिद्धार्थ, धृतिषेण, विजय, बुद्धिमान्, गङ्गदेव, धर्मसेन इत्येत एकादशाङ्गदशपूर्वपरमागमवेदिन एकादशाचार्या यथाक्रमं १०, १९, १७, २१, १८, १३, २०, १४, १६=१८३ वर्षपर्यन्तं तत्परमागमस्योपदेष्टार आसन् । पश्चान्नक्षत्र, जयपाल, पाण्डु, ध्रुवसेन, कंसाचार्य इत्येते पञ्चाचार्या एकादशाङ्गपरमागमधरा भूत्वा २२० वर्षपर्यन्तं यथाक्रमं तं—परमागमं व्याचख्युः ॥

ततः सुभद्र, यशोभद्र, भद्रबाहु (द्वितीय) लोहाचार्य इत्येते चत्वार आचार्याः प्रथमाङ्गपरमागमज्ञानधारिणो ११८ वर्षपर्यन्तं यथाक्रमं तस्योपदेष्टारोऽवर्तन्त । तेष्वेकादशाङ्गपरमागमज्ञानधारणाशक्तिः कुण्ठिता जाता । भगवद्वीरनिर्वृत्यनन्तरं तावत्पर्यन्तं त्र्यशीत्युत्तरषट्शतवर्षाणि (६८३) व्यतीतानीत्यवगम्यते गणनया । एतावत्पर्यन्तं गुरुपरम्पराक्रमः [1] पुराणकर्तृभिरपि कैश्चिदुल्लिखितोऽवलोक्यते ॥

---

[1] अहं सुधर्मा जम्बाख्यो निखिलश्रुतधारिणः ।
क्रमात्कैवल्यमुत्पाद्य निर्वास्यामस्ततो वयम् ॥ १३९ ॥
त्रयाणामस्मदादीनां कालः केवलिनामिह ।
द्वाषष्टिवर्षपिण्डः स्याद्भगवन्निर्वृतेः परम् ॥ १४० ॥

इतो गुरुपरम्परावबोधने काश्चित्पट्टावल्य, इन्द्रनन्दिविरचितश्रुतावतार-ग्रन्थः, कानिचिच्छिलाशासनानि च शरणम् । साधनैरेतैरेवमपि विज्ञायते यदर्हद्बलि, माघनन्दि, धरसेन, पुष्पदन्त, भूतबलीत्येतेऽप्याचार्याः प्रथमाङ्ग-परमागमज्ञातारो यथाक्रमं तं २८, २१, १९, ३०, २०=११८ वर्षपर्यन्त-मुपचरुयुरिति । एतेषामाचार्याणामेतान्यष्टादशोत्तरशतवर्षाणि संयुक्तानि भूत्वैव वीरनिर्वृतेः पश्चात् त्र्यशीत्युत्तरषट्शतवर्षाणि (६८३) व्यतीतानी-त्यपि प्रदर्शितानि तत्र । लोहाचार्यपर्यन्तमेव तावद्वर्षकाले व्यतीते सति तस्मिन्नेवैषामष्टादशोत्तरशतवर्षजीवितकालस्य कथं समावेशो भवतीत्यारेकायां समकालिकशिष्यशाखाभिन्नत्वेन सङ्गच्छेदित्यनुसन्धेयम् ॥

---

ततो यथाक्रमं विष्णुर्नन्दिमित्रोऽपराजितः ।
गोवर्धनो भद्रबाहुरित्याचार्या महाधियः ॥ १४१ ॥
चतुर्दशमहाविद्यास्थानानां पारगा इमे ।
पुराणं द्योतयिष्यन्ति कार्त्स्न्येन शरदः शतम् ॥ १४२ ॥
विशाखप्रोष्ठिलाचार्यौ क्षत्रियो जयसाह्वयः ।
नागसेनश्च सिद्धार्थो धृतिषेणस्तथैव च ॥ १४३ ॥
विजयो बुद्धिमान्गङ्गदेवो धर्मादिशब्दतः ।
सेनश्च दशपूर्वाणां धारकाः स्युर्यथाक्रमम् ॥ १४४ ॥
त्र्यशीतिशतमब्दानामेतेषां कालसङ्ग्रहः ।
तदा च कृत्स्नमेवेदं पुराणं विस्तरिष्यते ॥ १४५ ॥
ततो नक्षत्रनामा च जयपालो महातपाः ।
पाण्डुश्च ध्रुवसेनश्च कंसाचार्य इति क्रमात् ॥ १४६ ॥
एकादशाङ्गविद्यानां पारगाः स्युर्मुनीश्वराः ।
विंशं द्विशतमब्दानामेतेषां काल इष्यते ॥ १४७ ॥
तदा पुराणमेतत्तु पादोनं प्रथयिष्यते ।
भाजनाभावतो भूयो जायेताङ्गकनिष्ठता ॥ १४८ ॥
सुभद्रश्च यशोभद्रो भद्रबाहुर्महायशाः ।
लोहार्यश्चेत्यमी ज्ञेयाः प्रथमाङ्गाब्धिपारगाः ॥ १४९ ॥
समानां शतमेषां स्यात्कालोऽष्टादशाभिर्युतः ।
तुर्यो भागः पुराणस्य तदास्य प्रतनिष्यते ॥ १५० ॥

—**महापुराणस्य द्वितीयपर्वणि भगवज्जिनसेनाचार्यः.**

नात्रैकाङ्गपरमागमज्ञातृत्वकथनेनैवमवगन्तव्यं यच्छेषा एकादशाङ्गपरमागमप्रमेया निश्शेषं लुप्ता एवापि तु यावत्येकाङ्गपरमागमविषयधारणाशक्तिस्तावत्यां द्वादशाङ्गपरमागमगतसारतमप्रमेयाः सङ्क्षेपेण क्रोडीकृताः कालक्रमेणेत्यवगन्तव्यं, सर्वत्रेयमेव पद्धतिरनुगतेति च आरातीयैर्मुनिभिरितरैश्च कविभिः ॥

क्रिस्तमृत्यनन्तरं तस्य शकारम्भः । तस्मात्त्रिषष्ट्युत्तरषट्छतवर्षेभ्यः पूर्वं भगवद्वीरनिर्वृतिरभूदित्युक्तमेवोपरि । एतेन सुव्यक्तमिदं यद्भगवद्वीरनिर्वृतेरनन्तरं क्रिस्तनिधनपर्यन्तं तावद्वर्षाणि (६६३) व्यतीतानीति । क्रिस्तस्य जीवितकालः उपद्वात्रिंशद्वर्षाणीति विपश्चिद्भिरैतिहासिकैरभिधीयते । एतेन भगवद्वीरनिर्वृतेरेकत्रिंशदुत्तरषट्छतवर्षेभ्यः (६३१) पश्चात्क्रिस्तस्य जननमासीदित्यवगम्यते ॥

द्वादशाङ्गपरमागमपदसङ्ख्या प्रदर्शितैवोपरि । ग्रन्थबाहुल्यान्न तान् परमागमान् लिखितुमशकनृषयः । पुष्पदन्तभूतबल्याचार्यपर्यन्तमासंस्ते परमागमा ऋषिपरम्परायां कण्ठस्थाः । तावाचार्यौ जनतायां कालक्रमेण परमागमविषयधारणाशक्तिकुण्ठनमवगम्यावशिष्टागमलेखनाभावे सोऽपि विनश्येदित्यवबुध्य च तदा तेषां लेखने उपक्रम्य षड्खण्डागमान्विरच्य च ज्येष्ठसितपञ्चम्यां सङ्घसमन्वितौ परया भक्त्याऽपूजयतामत एव सा तिथिर्जैनानां श्रुतपञ्चमीत्याख्यया पवित्रा सञ्जातेति श्रुतावतारग्रन्थादवगम्यते ॥

उपर्युक्तकथनेन गुरुपरम्परायां परमागमविषयधारणाशक्तिः हीयमाना सञ्जातेत्यनुमीयते । किञ्चार्हद्बल्याचार्यस्य समये कालदोषतो मुनिषु सञ्जातं स्वस्वसङ्घपक्षपातं वीक्ष्य स आचार्यस्तेषां मुनीनां नान्दिसङ्घ, सेनसङ्घ, सिंह-

---

त्रयः क्रमात्केवलिनो जिनात्परे द्विषष्टिवर्षान्तरभाविनोऽभवन् ।
ततः परे पञ्च समस्तपूर्विणस्तपोधना वर्षशतान्तरे गताः ॥
त्र्यशीतिके वर्षशते तु रूपयुग्दशैव गीता दशपूर्विणः शते ।
द्वये च विंशेऽङ्गभृतोऽपि पञ्च शते च साष्टादशके चतुर्मुनिः ॥

—हरिवंशपुराणप्रशस्तिः.

सङ्घ, देवसङ्घ इति चतुरस्सङ्घान्विरचयामास। तत्र [1] नन्दिसङ्घे वीरनिर्वृते- स्त्र्यशीत्युत्तरषट्छतवर्षानन्तरं दशवर्षपर्यन्तं गुप्तिगुप्ताचार्यस्सङ्घाधिपतिर्बभूव। ततश्चतुर्वर्षपर्यन्तं माघनन्दी, तत्पश्चान्नवसंवत्सरपर्यन्तं जिनचन्द्रः, तदनन्तरं द्वापञ्चाशद्वर्षपर्यन्तं स्वनामधन्यो भगवान्कुन्दकुन्दाचार्यस्तदुपर्यष्टदिनोपेत- चत्वारिंशद्वर्षपर्यन्तमुमास्वामी नन्दिसङ्घपीठमलञ्चकार॥

## उमास्वाम्याचार्यः

भगवत्कुन्दकुन्दानन्तरमयमाचार्यप्रवर एकोत्तरशततमे विक्रमाब्दे, क्रिस्तीयप्रथमशताब्दस्य मध्यभागे (४३) कार्त्तिकासिताष्टम्यां नन्दिसङ्घपट्ट-

---

[1] *See* Historical Introduction to Tattvârtha Sûtra by J. L. Jaini, M.A., p. 10.

किञ्च—

श्रीमूलसङ्घेऽजनि नन्दिसङ्घस्तस्मिन्बलात्कारगणेऽतिरम्ये।
तत्राभवत्पूर्वपदांशवेदी श्रीमाघनन्दी नरदेववन्द्यः॥
पदे तदीये मुनिमान्यवृत्तो जिनादिचन्द्रः समभूदतन्द्रः।
ततोऽभवत्पञ्चसुनामधामा श्रीपद्मनन्दी मुनिचक्रवर्ती॥

—नन्दिसङ्घपट्टावली.

तस्यान्वये भूविदिते बभूव यः पद्मनन्दिप्रथमाभिधानः।
श्रीकुन्दकुन्दादिमुनीश्वराख्यः सत्संयमादुद्गतचारणर्द्धिः॥ ५॥
अभूदुमास्वातिमुनीश्वरोऽसावाचार्यशब्दोत्तरगृध्रपिञ्छः।
तदन्वये तत्सदृशोऽस्ति नान्यस्तात्कालिकाशेषपदार्थवेदी॥ ६॥

—६५तमः श्रवणबेलुगुळशासनलेखः.

तदीयवंशाकरतः प्रसिद्धादभूददोषा यतिरत्नमाला।
बभौ यदन्तर्मणिवन्मुनीन्द्रः स कुण्डकुन्दोदितचण्डदण्डः॥ १०॥
अभूदुमास्वातिमुनिः पवित्रे वंशे तदीये सकलार्थवेदी।
सूत्रीकृतं येन जिनप्रणीतं शास्त्रार्थजातं मुनिपुङ्गवेन॥ ११॥
स प्राणिसंरक्षणसावधानो बभार योगी किल गृध्रपक्षान्।
तदाप्रभृत्येव बुधा यमाहुराचार्यशब्दोत्तरगृध्रपिञ्छम्॥ १२॥

—२५८तमः श्रवणबेलुगुळशासनलेखः.

मधिरुह्य चत्वारिंशद्वर्षपर्यन्तं शशास मुनीनिति चतुरशीतिवर्षाणि तस्य जीवितकाल इति चावगम्यते [1] पट्टावल्यादिना ॥

शिलालेखगत " तात्कालिकाशेषपदार्थवेदी " इति विशेषणेन, भट्टाकलङ्कविरचितकर्णाटकशब्दानुशासनगत " प्रवचनपारावारपारगामी " इति विशेषणेन, महीशूरजनपदान्तर्गतनगरप्रान्तस्थितषट्चत्वारिंशत्तमशिलालेखगत—

" तत्त्वार्थसूत्रकर्तारमुमास्वातिमुनीश्वरम् ।
श्रुतकेवलिदेशीयं वन्देऽहं गुणमन्दिरम् ॥ "

इति श्लोकोल्लिखित " श्रुतकेवलिदेशीय " इति विशेषणेन च विशेषितस्य श्रीमदुमास्वाम्याचार्यस्य समकालिकस्तत्सदृशो न कोऽप्यासीदिति, तस्यैवाचार्यपुङ्गवस्योमास्वातिगृध्रपिञ्छ इति नामद्वयमासीदिति च विज्ञायते । अत्र केषाञ्चिदिदमस्ति मतं यदस्याचार्यस्य नाम दिगम्बरजैना उमास्वामीति व्यवहरन्ति, श्वेताम्बरजैना उमास्वातिरिति, तच्च [2] " इति श्वेताम्बराचार्य श्री उमास्वामिगणिकृततत्त्वार्थसूत्रं तस्य बालावबोधः श्रीयशोविजयगणिकृतः समासः " इत्यत्रोमास्वामीति श्वेताम्बरजैनसम्प्रदायिनो यशोविजयस्य उल्लेखदर्शनान्निर्मूलमिति प्रतीयते । एतेनोभयाम्नायावलम्बिभिरुभयथापि व्यवह्रियेते ते नामनी तस्येति निष्कर्षः । तस्य गृध्रपिञ्छ इति तु नाम धवलटीकायां कालद्रव्यवर्णनावसरे " तह गिद्धपिच्छाइरियप्पयासिदतच्चत्थसुत्तेवि " इति वीरसेनाचार्येण, एकचत्वारिंशदुत्तरनवशततमे क्रिस्ताब्दे विरचिते कर्णाटकादिपुराणे " आर्यनुतगृध्रपिञ्छाचार्य " इति पम्पमहाकविना क्रिस्तीयाब्देऽष्टसप्तत्युत्तरनवशततमे विरचिते कर्णाटकत्रिषष्टिलक्षणपुराणे :—

---

[1] *See* Historical Introduction to Tattvârtha Sûtra by J. L. Jaini, M.A., p. 10. [2] अवलोक्यतां सुखलालपण्डितविरचिततत्त्वार्थसूत्रविवेचनपरिचयस्य '५७तमं पृष्ठम्.

वसुमतिगे नेगळे तत्त्वा-
थसूत्रमं बरेद गृध्रपिञ्छाचार्यर्
जसदिं दिगन्तमं मु
द्रिसि जिनशासनद महिमेयं प्रकटिसिदर् ॥ ३ ॥

इति चामुण्डरायेणाप्युल्लिखितमुल्लेखनमवलोक्यते । तत्त्वार्थसूत्रमातृकासु क्वचिदन्ते—

तत्त्वार्थसूत्रकर्तारं गृध्रपिञ्छोपलक्षितम् ।
वन्दे गणीन्द्रसञ्जातमुमास्वामिमुनीश्वरम् ॥

इत्ययमपि श्लोकस्समुपलभ्यते यस्मिन् गृध्रपिञ्छोमास्वामिनामद्वयोल्लेखोऽस्ति । उपपञ्चाशाधिकद्विशतोत्तरसहस्रतमे क्रिस्तीयाब्दे पार्श्वपण्डितेन विरचिते कर्णाटकपार्श्वनाथपुराणे—

अनुपमतत्त्वार्थं पु-
ण्यनिबन्धनमप्पुदेंतु मनदोळ् ने-
ट्टने नेलसितंते नेलसि-
र्कनिशमुमास्वातिपादयतिपादयुगम् ॥

इत्यस्मिन् श्लोके स ग्रन्थकर्ता "उमास्वातिपादयतिपादयुगं मन्मनसि तिष्ठतु" इति स्तौति स्म ॥

एवमोवोपविंशत्यधिकत्रिशतोत्तरसहस्रतमे क्रिस्ताब्दे ब्रह्मदेवकविना कर्णाटकभाषायां विरचिते समयपरीक्षाग्रन्थे—

जगदोळगुळ्ळ सुतत्त्वम
नगणितमननन्तभेदभिन्नस्थितियम्
सुगमदिनरिवन्तिरे पे-
ळ्द गुणाढ्यं गृध्रपिञ्छमुनि केवळने ॥ ३ ॥

इत्यनौत्स कविर्गृध्रपिञ्छमुनिवरम् ॥

पूर्वोक्तचतुष्षष्टितमशिलालेखगतषष्ठश्लोके भगवदुमास्वामिनो गुरुपरम्परासम्बन्धप्रदर्शनावसरे "तदन्वये" इत्युक्तं, न तु शिष्यशब्दोपादानमतोऽयमुमास्वामी भगवतः कुन्दकुन्दस्य शिष्यो नावर्तिष्टेति केषाञ्चिन्मतम् । किंतु जैनमुनिपरम्परायां योनिसम्बन्धस्याऽभावादन्वयशब्दस्यात्र विद्यासम्बन्धार्थ एव ग्राह्यः । स च साक्षाद्वा परम्परया वा गुरुशिष्यसम्बन्ध एव । किञ्च कुन्दकुन्दाचार्यविरचितसमयसारादिग्रन्थानां विषया उमास्वामिना तत्त्वार्थसूत्रग्रन्थे उपचिताः । अत उमास्वाम्याचार्ये कुन्दकुन्दाचार्यान्तेवासित्वव्यवस्थापनमुचितं प्रतिभाति ॥

## उमास्वाम्याचार्यस्याम्नायविचारः

आचार्यप्रवरस्यास्याम्नायविचारे क्रियमाणे सत्यध उदाह्रियमाणसाधनैरयमाचार्यो दिगम्बरजैनाम्नायावलम्ब्येवेत्यवगम्यते—

१. भगवदुमास्वाम्याचार्यविरचिततत्त्वार्थसूत्रग्रन्थस्य समन्तभद्राचार्य, पूज्यपादाचार्य, अकलङ्काचार्य, विद्यानन्दाचार्यादिभिरुद्दामदिगम्बरजैनाचार्यैर्गन्धहस्तिमहाभाष्य, सर्वार्थसिद्धि, राजवार्त्तिक, श्लोकवार्त्तिकादिव्याख्याग्रन्था विरचिताः ॥

२. दिगम्बरजैनाचार्येण भगवत्कुन्दकुन्देन विरचितसमयसारादिग्रन्थानां विषयाः सङ्गृहीता भगवदुमास्वाम्याचार्येण तत्त्वार्थसूत्रग्रन्थे ॥

३. कतिपयशासनलेखैः, कर्णाटककविसार्वभौम-पम्प, चामुण्डरायपार्श्वपण्डित, ब्रह्मदेवकवि, भट्टाकलङ्कदेवप्रभृतिभिर्दिगम्बरजैनाविपश्चिद्भिर्भक्तिभरेण स्तुतो भगवानुमास्वाम्याचार्यः ॥

४. विद्यानन्दाचार्यवर्येण विरचिताप्तपरीक्षायाः स्वोपज्ञटीकायां "किंपुनस्तत्परमेष्ठिनो गुणस्तोत्रं शास्त्रादौ **सूत्रकाराः** प्राहुरिति निगद्यते" "किमर्थं पुनरिदं भगवतोऽसाधारणं मोक्षमार्गप्रणेतृत्वं कर्मभूभृद्भेत्तृत्व

विश्वतत्त्वज्ञातृत्वं चात्र प्रोक्तं **भगवद्भिरित्याह**" इत्यत्र "सूत्रकाराः" "भगवद्भिः" इति बहुवचनप्रयोगात् भगवच्छब्दप्रयोगाच्च भगवदुमास्वाम्याचार्यो विद्यानन्दाचार्येण बहुगौरवबुद्ध्या स्तुत इत्यवबुध्यते ॥

५. भगवदुमास्वाम्याचार्यविरचिततत्त्वार्थसूत्रग्रन्थस्यास्य नवमाध्यायगतनवमसूत्रे प्रतिपादितेषु संवरतत्त्वभेदेषु द्वाविंशतिपरीषहेषु षष्ठो नाग्न्यपरीषहो दिगम्बरजैनमुनिष्वेव सुसङ्घटते, न तु सितपटधारिषु श्वेताम्बरजैनमुनिषु । यद्ययमाचार्यपुङ्गवः श्वेताम्बरजैनाम्नायावलम्ब्यभविष्यत्तर्हि स्वाम्नायविरुद्धामुक्तिं न कदाप्यकथयिष्यत् । परस्परविरुद्धयोः सपरिग्रहत्वापरिग्रहत्वयोरुभयोरपि संवरहेतुत्वकथनं न युक्तमपि त्वपरिग्रहत्वस्यैव तद्धेतुत्वकथनं युक्तं । सितपटपरिग्रहसत्त्वेऽपि मुनेर्महाव्रतत्वं तस्य संवरहेतुत्वं च यदि सङ्घटेत तर्हि महाव्रतधारणानुष्ठानक्लेशस्य वैयर्थ्यं स्यात् ॥

६. क्रिस्तीयद्वादशतमशताब्दीयेन बालचन्द्रमुनिना तत्त्वार्थसूत्रव्याख्यायां तत्त्वरत्नप्रदीपिकायां "निर्ग्रन्थाचार्यरप्प" "निर्ग्रन्थाचार्यनुमप्प" इति, श्रुतसागरवर्णिना तत्त्वार्थसूत्रव्याख्यायां "निर्ग्रन्थाचार्यवर्य" इति च उल्लिखितो भगवदुमास्वाम्याचार्यः ॥

७. प्रत्नेनोद्दामविदुषा श्रीपूज्यपादाचार्येण विरचितसर्वार्थसिद्धौ "मुनिपरिषन्मध्ये सन्निषण्णं मूर्तमिव मोक्षमार्गं वपुषा निरूपयन्तं युक्त्यागमकुशलं परहितप्रतिपादनैककार्यमार्यनिषेव्यं **निर्ग्रन्थाचार्यवर्यं**" इति रुचिरपदरचनया स्तुतोऽयमुमास्वाम्याचार्यः । अत्रापि "निर्ग्रन्थाचार्यवर्यं" इति विशिष्योक्तत्वात् स आचार्यपुङ्गवो नासीत्सितपटादिग्रन्थवानपि तु निर्ग्रन्थ — निष्परिग्रह — दिगम्बरजैनाचार्य एवेति विज्ञायते ।

## उमास्वाम्याचार्यविरचिततत्त्वार्थसूत्रग्रन्थः

भगवद्वीरहिमवत्कुत्कीलाद्विनिर्गता जैनागमवाग्गङ्गा प्राकृतगङ्गावैपरीत्येनाग्रे दोषाद्दुःषमकालस्य स्ववैशाल्यमुपसंहृत्य क्षयिमाना तत्तत्कालिक-

विद्वदाचार्यपुङ्गवैः कालदेशदशानुरोधेन संक्षिप्ता । तस्यामाचार्यपरम्पराया-मुपनिपतितस्तात्कालिकाशेषमुनिप्रवरोऽयमुमास्वाम्याचार्यः स्वविदितजैनागम-पारावारं "पण्णवणिज्जाणं पुण अणन्तभागो सुदणिबद्धो" इत्युक्त्यनुसारेण सङ्गृह्य सूत्ररूपेण ग्रन्थमिमं तत्त्वार्थसूत्रनामकं रचयामास । अल्पाक्षरं सन्देहरहितं सारयुतं विश्वतोमुखमवहेलनविमुक्तं निर्दुष्टं च यत्तदेव सूत्रमिति सूत्रलक्षणविदो विदुः । तथाचोक्तं दुर्गादासेन मुग्धबोधव्याकरणटीकायां—

"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतो मुखं ।
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः ॥"

एवं समयसारतात्पर्यवृत्तावप्युक्तं सूत्रलक्षणं । यच्च "श्रुतप्रकृतसाम-र्थ्ययुक्तो हि भवति सूत्रार्थः"—सूत्रयति अर्थं ग्रथ्नातीति सूत्रमित्यर्थः । ग्रन्थस्यास्य तत्त्वार्थाधिगमसूत्रं तत्त्वार्थसूत्रं मोक्षशास्त्रमिति च नामानि विद्यन्ते ।

## तत्त्वार्थसूत्रग्रन्थप्रतिपादितविषयविचारः

ग्रन्थेऽस्मिन् प्रथमानुयोगविषयमन्तरेणानुयोगत्रयविषयाः सङ्ग्रहेण ग्रथिताः प्रतिभान्ति । सम्यग्दर्शनादीनां विषयीभूततत्त्वापेक्षया तु सप्त-तत्त्वानि निरूपितान्यस्मिन् ग्रन्थ इति वक्तुं पार्यते । यथा—

तत्राचतुर्थाध्यायं जीवतत्त्वनिरूपणं, पञ्चमाध्याये अजीवतत्त्वप्रातिपादनं, षष्ठसप्तमाध्याययोरास्रवतत्त्वोपदेशः, अष्टमाध्याये बन्धतत्त्वविवेचनं, नवमा-ध्याये संवरनिर्जरातत्त्वयोर्व्युत्पादनं, दशमाध्याये चरमपुरुषार्थभूतमोक्ष-तत्त्वकथनं च कृतम् ॥

ग्रन्थस्यास्य प्रकृतप्रस्तावनाविषयीभूतग्रन्थस्य च व्याख्येयव्याख्यान-सम्बन्धसत्त्वादस्य मूलग्रन्थस्य किञ्चिद्विस्तरतो विषयविवरणं चिकीर्षितं । तथाहि—

१. दशाध्यायपरिच्छिन्नस्यास्य ग्रन्थस्य प्रथमाध्याये त्रयस्त्रिंश-त्सूत्राणि विद्यन्ते । यथासूत्रक्रमं मोक्षमार्गत्वेनोपात्तानां सम्यग्दर्शनज्ञानचारित्रा-

णामुपदेशः, सम्यग्दर्शनस्वरूपकथनं, तस्य निसर्गाधिगमभेदादुत्पत्तिकारण-द्वयनिरूपणं, जीवादिसप्ततत्त्वनिर्देशः, तेषां नामस्थापनाद्रव्यभावैर्न्यास—निक्षेपकथनं, सम्यग्दर्शनादीनां जीवादीनां चाधिगमकारणविवरणं, तेषां निर्देशस्वामित्वादिभिः सत्सङ्ख्यादिभिश्च बोधो भवतीति प्रख्यापनं, पञ्चज्ञान-भेदविशोधनं, तेषां प्रत्यक्षपरोक्षप्रमाणत्वविवेचनं, मतिज्ञानपर्यायशब्द-निरूपणं, तस्येन्द्रियानिन्द्रियनिमित्तत्वकथनं, तस्य भेदानां विषयाणां च प्रतिपादनं, श्रुतज्ञानोत्पत्तिकारणस्य तद्भेदानां च उपन्यासः, अवधिज्ञानस्य स्वामिनां भेदानां च प्रदर्शनं, मनःपर्ययज्ञानभेदकथनं, मत्यादिज्ञानानां विषयस्वरूपोपवर्णनं, विपर्ययज्ञानस्वरूपकथनं, तयोर्वैशिष्ट्यख्यापनं, नैगम-सङ्ग्रहादिसप्तनयानां संग्रथनं च प्रथमाध्याये कृतम् ॥

२. द्वितीयाध्याये त्रिपञ्चाशत्सूत्राणि वर्तन्ते । यथाक्रमं जीवस्यौप-शमिकादिपञ्चस्वतत्त्व—भावनिरूपणं, तेषां यथाक्रमं द्विनवाष्टादशैकविंशति-त्रिभेदप्रतिपादनं, जीवस्य द्विविधोपयोगरूपलक्षणकथनं, तयोर्भेदख्यापनं, संसारिमुक्तजीवभेदव्यवस्था, संसारिजीवप्रभेदः, इन्द्रियप्रकाराचिन्तनं, इन्द्रिय-विषयप्रतिपादनं, इन्द्रियवृद्धिक्रमेण जीवनिर्देशः, विग्रहगतिविवरणं, तस्याः समयनियमः, जीवानां जन्मभेदकथनं, तेषामुत्पत्तिस्थान—योनिप्रख्यापनं, शरीर-भेदस्वरूपाभिधानं, एकस्मिन्समये सम्भवनीयशरीरनिर्देशः, जीवानां गत्य-पेक्षया वेदनिरूपणं, अकालमृत्युरहितसंसारिजीवप्रतिपादनं च कथितं द्विती-याध्याये ॥

३. तृतीयाध्याये एकोनचत्वारिंशत्सूत्राणि विलसन्ति । तत्र यथाक्रममधोधःस्थितसप्तनरकावनिप्रतिपादनं, तासु नारकावास—बिलसङ्ख्या-निर्देशः, नारकाणां स्वभावदुःखप्रकारनिरूपणं, तेषामायुष्यनियमविचारः, मध्यलोकस्थितजम्बूद्वीपलवणोदादीनां वर्णनं, मध्यगतमेरोर्जम्बूद्वीपस्य विस्तारोपन्यासः, जम्बूद्वीपस्थितभरतादिसप्तक्षेत्राणां हिमवदादिषट्कुलपर्वतानां

च विवरणं, तेषां पर्वतानां वर्णविष्कम्भवर्णनं, तदचलोपरिस्थितपद्मादिह्रदानां षण्णां ख्यापनं, तेषामायामविष्कम्भावगाहनिर्देशः, तन्मध्यस्थितपुष्करविस्तारादिवर्णनं, तन्निवासिनीनां श्रीह्र्यादिदेवीनां निरूपणं, भरतादिसप्तक्षेत्रमध्यवाहिनीनां गङ्गासिन्ध्वादिचतुर्दशनदीनामुपवर्णनं, तासां गमनदिङ्निर्देशः, तासूपनदीसंयोगकथनं, भरतक्षेत्रादीनां विदेहावसानवर्तिनां विस्तारावेदनं, औत्तरीयभूभृधराणां दक्षिणभूभृधरतुल्यविस्तारत्ववर्णनं, षट्समयाभ्यामुत्सर्पिण्यवसर्पिणीभ्यां भरतैरावतयोर्वृद्धिह्रासनिवेदनं, इतरभुवामवस्थितत्वकथनं, हैमवतादिक्षेत्रजानामायुःपरिमितिः, प्रकारान्तरेण भरतक्षेत्रस्य विस्तारवर्णनं, धातकीखण्डपुष्करार्धयोर्भरतादीनां द्वित्वकथनं, मनुष्यजनिक्षेत्रावधिनिर्देशः आर्यम्लेच्छत्वेन मनुष्यभेदद्वैविध्यख्यापनं, कर्मभूमित्वेन नियतानां क्षेत्राणं, निरूपणं, नरतिरश्चां जघन्योत्कृष्टायुःपरिमाणं च परिभाषितं तृतीयाध्याये ॥

४. चतुर्थाध्याये द्विचत्वारिंशत्सूत्राणि विद्योतन्ते । तत्र यथाक्रमं चतुर्निकायदेवनिर्देशः, आदिनिकायत्रयदेवानां लेश्यानिरूपणं, कल्पोपपन्नपर्यन्तदेवानां प्रभेदप्रतिपादनं, इन्द्रसामानिकादिदशविधदेवप्रभेदविवृतिः, ईशानकल्पपर्यन्तदेवानां तदितरेषामच्युतस्वर्गावसानानां च कामसेवनाक्रमविवरणं, तदुपरिष्ठदेवानां तदभाववचनं, आदिनिकायत्रयदेवानामसुरादिप्रभेदकथनं, ज्योतिर्देवानां गतिचिन्तनं, नृलोकाद्बहिस्तेषामवस्थितत्वकथनं, वैमानिकदेवानां भेदद्वयप्रतिपादनं, सौधर्मादिस्वर्गविमाननिरूपणं, नाकिनां तेषां गतिशरीरादिस्थितिप्रभावादिहीनाधिक्यवर्णनं, तेषु लेश्याव्यवस्था, लौकान्तिकदेवप्रभेदप्रतिपादनं, तिर्यग्योनिजप्रख्यापनं, देवानां नारकाणां च जघन्योत्कृष्टायुर्नियमनं, लौकान्तिकदेवानामष्टसागरायुर्निरूपणं च निर्व्यूढं चतुर्थाध्याये ॥

५. पञ्चमाध्याये द्विचत्वारिंशत्सूत्राणि सन्ति । तत्र यथाक्रमं धर्माधर्माकाशपुद्गलानामजीवत्वकायत्वनिरूपणं, तेषां जीवानां च द्रव्यत्वकथनं, तेषां द्रव्याणां नित्यत्वाऽवस्थितत्वाऽरूपित्वख्यापनं, पुद्गलानां रूपित्वप्रतिपादनं,

धर्माधर्माकाशानामेकद्रव्यत्वनिष्क्रियत्वानिवेदनं, धर्माधर्मैकजीवानामसङ्ख्येय-प्रदेशत्वप्रकाशनं, अणोर्द्वितीयादिप्रदेशाभावप्रबोधनं, सर्वद्रव्याणां लोका काशेऽवस्थितत्वाभिधानं, धर्माधर्मयोः कृत्स्नलोकाकाशावस्थितत्वकथनं, पुद्गला-नामेकप्रदेशाद्यवस्थितत्वावबोधनं. प्रदीपवत्प्रदेशसंहारविसर्पाभ्यां जीवाना-मसङ्ख्येयभागाद्यवस्थितत्वनिरूपणं, धर्मादिद्रव्याणामुपकारोपन्यासः, पुद्गलद्रव्य-लक्षणपर्यायभेदप्रतिष्ठापनं, भेदोत्पत्तिहेतुनिर्देशः. द्रव्यलक्षणनिरूपणं, सतो लक्षणकथनं, नित्यस्य स्वरूपविशोधनं, विवक्षातो धर्मिण्यनेकधर्माविरोध-प्रतिपादनं, पुद्गलाणूनां बन्धहेतुख्यापनं, बन्धयोग्यायोग्यपुद्गलाणुविवरणं, प्रकारान्तरेण द्रव्यलक्षणविवृतिः, कालस्य द्रव्यत्वानन्तसमयत्वसाधनं, गुणानां पर्यायाणां च लक्षणनिवेदनं च समर्थितं पञ्चमाध्याये ।।

६. षष्ठाध्याये सप्तविंशतिसूत्राणि सङ्ग्रथितानि । तत्र सूत्रक्रममनति-क्रम्य कायवाङ्मनसां क्रियारूपयोगस्याभिधानं, स एवास्रव इति प्रतिपादनं, शुभयोगः पुण्यस्याऽशुभयोगः पापस्यास्रवकारणमिति निरूपणं, क्रोधादि-कषाययुतस्य साम्परायिकास्रवोऽकषायस्येर्यापथास्रवो भवत इति प्रख्यापनं, साम्परायिकास्रवस्य भेदानामिन्द्रियकषायाव्रतक्रियाणां तासामन्तर्भेदानां च विवरणं, तीव्रमन्दादिकारणविशेषादास्रवविशेषविवेचनं, आस्रवस्य जीवाजीवाधि-करणनिरूपणं, तयोरधिकरणयोः संरम्भसमारम्भादिनिर्वर्तनानिक्षेपादिप्रभेदवि-शोधनं, ज्ञानदर्शनावरणयोस्तत्प्रदोषाद्यास्रवभेदप्रतिपादनं, असद्वेद्यस्य सद्वेद्यस्य च यथाक्रमं दुःखशोकादिभूतव्रत्यनुकम्पाद्यास्रवभेदव्यवस्थापनं, दर्शनमोहस्य केवल्याद्यवर्णवादरूपास्रवभेदविवरणं, चारित्रमोहस्य कषायोदयतीव्रपरिणाम रूपास्रवकारणत्वनिवेदनं, नरकादिचतुर्गतीनामायुःकर्मणो भिन्नभिन्नास्रवकार-णतासाधनं, शुभाशुभनामकर्मास्रवकारणप्रख्यापनं, तीर्थकरत्वशुभतमनाम-कर्मणो दर्शनविशुद्ध्यादिषोडशभावनारूपास्रवकारणप्रकाशनं, नीचोच्चगोत्र-कर्मणोरास्रवकारणनिवेदनं, अन्तरायकर्मणो विघ्नकरणरूपास्रवकारणनिरूपणं च निर्वृत्तं षष्ठाध्याये ।।

७. सप्तमाध्याये एकोनचत्वारिंशत्सूत्राणि रचितानि। तत्र सूत्रक्रमेण हिंसादिपञ्चपापनिवृत्तिरूपव्रतनिरूपणं, तस्याणुमहत्त्वेन द्वैविध्यकथनं, अहिंसादिव्रतपञ्चकस्य स्थैर्यार्थं पञ्च पञ्च भावनाप्रतिपादनं, हिंसादिष्विहामुत्र चापायावद्यचिन्तननिर्देशः, तानि दुःखरूपाणीति वा भावनाकथनं, सत्त्वगुणाधिकक्लिश्यमानाऽविनयेषु चतुर्विधेषु जीवेषु मैत्रीप्रमोदकारुण्यमाध्यस्थ्यभावनाप्रसाधनं, संवेगवैराग्यकृते जगत्कायस्वभावचिन्तनं, हिंसादिपञ्चपापानां लक्षणनिर्देशः, व्रतिस्वरूपं, अगार्यनगारश्चेति व्रतिभेदख्यापनं, अणुव्रतोऽगारीति तस्य गुणव्रतशिक्षाव्रतभेदभूतसप्तशीलविवरणं, सल्लेखनास्वरूपनिर्देशः, सम्यग्दर्शनव्रतपञ्चकशीलसप्तकसल्लेखनानां पञ्चपञ्चातिचारविवेचनं, दानस्वरूपप्रतिपादनं, विधिद्रव्यदातृपात्रविशेषाद्दानविशेषो भवतीति प्रतिष्ठापनं च प्रकाशितं सप्तमाध्याये ॥

८. अष्टमाध्याये षड्विंशतिसूत्राणि विराजन्ते। तत्र यथाक्रमं मिथ्यादर्शनाविरतिप्रमादकषाययोगानां बन्धहेतुत्वनिरूपणं, बन्धलक्षणनिर्देशः, प्रकृतिस्थित्यादिबन्धभेदप्रतिपादनं, मूलप्रकृतीनामष्टानामुत्तरप्रकृतीनामष्टचत्वारिंशदुत्तरशतस्य च नामपरिगणना, मूलप्रकृतीनां जघन्योत्कृष्टायुःपरिसङ्ख्यानं, अनुभागबन्धलक्षणप्रतिपादनं, ततोऽपि निर्जरा भवतीति ख्यापनं, प्रदेशबन्धलक्षणकथनं,[1] पुण्यप्रकृतीनां [2] पापप्रकृतीनां च नामनिर्देशश्च कृतोऽष्टमाध्याये ॥

---

[1] सादं तिण्णेवाऊ उच्चं णरसुरदुगं च पञ्चिन्दी।
देहा बन्धणसङ्घादङ्गोवङ्गाइं वण्णचओ ॥ ४१ ॥
समचउरवज्जरिसहं चउघादूणगुरुछक्कसग्गमणम्।
तसबारसठ्ठसट्ठी बादालमभेददो सत्था ॥ ४२ ॥

—गोमटसारकर्मकाण्डः.

[2] घादी णीचमसादं णिरयाऊ णिरयतिरियदुग जादी।
सण्ठाणसंहदीणं चदुपणपणगं च वण्णचओ ॥ ४३ ॥
उवघादमसग्गमणं थावरदसयं च अप्पसत्था हु।
बन्धुदयं पडि भेदे अडणउदिसयं दुचदुरसीदिदरे ॥ ४४ ॥

—गोमटसारकर्मकाण्डः.

९. नवमाध्याये सप्तचत्वारिंशत्सूत्राणि सूत्रितानि । तत्र सूत्रक्रममनुसृत्य संवरलक्षणकथनं, संवरस्य गुप्त्यादिकारणनिरूपणं, गुप्तिलक्षणख्यापनं, समितिधर्मानुप्रेक्षापरीषहाणां प्रभेदनिर्देशः, सूक्ष्मसाम्परायादिगुणस्थानत्रये चतुर्दशपरीषहा जिने एकादशपरीषहाः षष्ठादिगुणस्थानत्रये सर्वे परीषहा भवन्तीति व्यवस्थापनं, परषिहाणां कर्मोदयनिमित्तनिर्देशः, युगपदेकस्मिन्नेकाद्येकोनविंशतिपरीषहसम्भावनानिवेदनं, चारित्रभेदकथनं, बाह्याभ्यन्तरतपोभेदविवेचनं, तेषां तपसां प्रभेदप्रतिपादनं, ध्यानस्य लक्षणोपन्यासः, तस्य भेदनिरूपणं, धर्म्यशुक्लयोर्मोक्षहेतुत्वकथनं, आर्तध्यानस्वरूपप्रभेदस्वामिनिर्देशः, रौद्रध्यानप्रभेदस्वामिविशोषनं, धर्म्यध्यानभेदप्रख्यापनं, शुक्लध्यानभेदानां स्वामिनिर्देशः, तद्ध्यानस्य प्रभेदाचिन्तनं, तेषां स्वरूपविशेषप्रतिपादनं, स्वामिविशेषान्निर्जराधिक्यवर्णनं, निर्ग्रन्थभेदकथनं, तद्भेदकारणनिरूपणं च उपपादितं नवमाध्याये ॥

१०. दशमाध्याये नवसूत्राणि प्रकाशन्ते । तत्र सूत्रक्रममनुलङ्घ्य केवलज्ञानोत्पत्तेर्मोहादिघातिकर्मक्षयहेतुत्वनिरूपणं, मोक्षहेतोः कारणस्य च कथनं, मोक्षस्यौपशमिकादिभव्यत्वानामभावहेतुत्वप्रतिपादनं, मोक्षे केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वास्तित्वख्यापनं, जीवस्य कृत्स्नकर्मक्षयानन्तरमालोकान्तादूर्ध्वगमननिवेदनं, ऊर्ध्वगमनस्याविद्धकुलालचक्राद्युदाहरणपूर्वकं पूर्वप्रयोगादिकारणचतुष्टयविवेचनं, लोकान्तादूर्ध्वगमनाभावहेतुकथनं, भूत-कालप्रज्ञापननयापेक्षया मुक्तजीवभेदास्तित्वनिर्देशश्च प्रदर्शितो दशमाध्याये ॥

## तत्त्वार्थसूत्रग्रन्थस्यास्योत्पत्तिहेतुविचारः

यद्यपि महात्मानो लोकोपकारार्थं सन्मार्गोपदेशकग्रन्थनिर्माणे–सम्यग्ज्ञानदाने स्वयमेव प्रवर्तन्ते ; न कस्याप्यस्ति तेषां चोदनाया आवश्यकता ; तथाप्यपवादरूपेण क्वचित्तस्य हेतुर्दृश्यते । तथा हि—

१. श्रीपूज्यपादाचार्यविरचितसर्वार्थसिद्धिव्याख्यायां "कश्चिद्भव्यः प्रत्यासन्ननिष्ठः प्रज्ञावान् स्वहितमुपलिप्सुर्विविक्ते परमरम्ये भव्यसत्त्वविश्रा-

ाास्पदे क्वचिदाश्रमपदे मुनिपरिषन्मध्ये सन्निषण्णं मूर्तमिव मोक्षमार्गमवाग्विसर्गं वपुषा निरूपयन्तं युक्त्यागमकुशलं परहितप्रतिपादनैककार्यमार्यनेषेव्यं निर्ग्रन्थाचार्यवर्यमुपसद्य सविनयं परिपृच्छति स्म—'भगवन्! किं खलु आत्मने हितं स्यात्?' इति। स आह—'मोक्ष' इति। स एव पुनः प्रत्याह—'किं स्वरूपोऽसौ मोक्षः? कश्चास्य प्राप्त्युपायः?' इति। आचार्य आह—'निरवशेषनिराकृतकर्ममलकलङ्कस्याऽशरीरस्यात्मनोऽचिन्त्यस्वाभाविकज्ञानादिगुणमव्याबाधसुखमात्यन्तिकमवस्थान्तरं मोक्षः' इति। तस्यात्यन्तपरोक्षत्वाच्छद्मस्थाः प्रवादिनस्तीर्थकरंमन्यास्तस्य स्वरूपमस्पृशन्तीभिर्वाग्भिर्युक्त्याभासनिबन्धनाभिरन्यथा परिकल्पयन्ति—'चैतन्यं पुरुषस्य स्वरूपं, तच्च ज्ञेयाकारपरिच्छेदपराङ्मुखम्' इति। तत्सदप्यसदेव, निराकारत्वात्खरविषाणवत्। 'बुद्ध्यादिवैशेषिकगुणोच्छेदः पुरुषस्य मोक्षः' इति च। तदपि परिकल्पनमसदेव, विशेषलक्षणशून्यस्यावस्तुत्वात्। 'प्रदीपनिर्वाणकल्पमात्मनिर्वाणम्' इति च। तस्य खरविषाणवत्कल्पना तैरेवाहत्य निरूपिता। इत्येवमादि। तस्य स्वरूपमनवद्यमुत्तरत्र वक्ष्यामः। तत्प्राप्त्युपायं प्रत्यपि ते विसंवदन्ते—'ज्ञानादेव चारित्रनिरपेक्षात्तत्प्राप्तिः, श्रद्धानमात्रादेव वा ज्ञाननिरपेक्षाच्चारित्रमात्रादेव' इति च। व्याध्यभिभूतस्य तद्विनिवृत्त्युपायभूतभेषजविषयव्यस्तज्ञानादिसाधनत्वाभाववत्। एवं व्यस्तं ज्ञानादि मोक्षप्राप्त्युपायो न भवति—किं तर्हि? तत्त्रितयं समुदितम्' इत्याह—सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" इति॥

२. नयकीर्तिसिद्धान्तचक्रवर्तिनोऽन्तेवासिना बालचन्द्रमुनिपुङ्गवेन उपसप्तत्यधिकशतोत्तरसहस्रतमे (११७०) क्रिस्तीयाब्दे विरचिततत्त्वार्थसूत्रव्याख्यायां तत्त्वरत्नप्रदीपिकायाम्—

"सौराष्ट्रदेशद मध्यस्थितोर्जयन्तगिरिसमीपवर्ति गिरिनगराभिधानदोळासन्नभव्यनुं स्वहितार्थियुं द्विजकुलोत्पन्ननुं श्वेताम्बरभक्तनुमप्प सिद्धय्यनेंबनोर्वं सितपटमतानुकूलसकलशास्त्रंगळनरिदु मोक्षमार्गप्रतिपादकशास्त्र-

करणोद्यतचित्तं 'दर्शनज्ञानचारित्राणि मोक्षमार्गः' एंदु सूत्रमं पलगेयोळबरे-देनानुमोंदु कारणमं कुरित्तु पोपुदुमा मध्याह्नसमयदोळुमास्वामिनामधेय श्री गृध्रपिंछाचार्यदेवं चर्यानिमित्तं बंदातनमनेयोळ्निंदु चर्यानन्तरं पलगे-योळबरेद, सम्यक्छब्दमिल्लदोडोळ्ळिळतल्लेंदु, सूत्रद मोदलोळसम्यक्छब्दमं बरेदु पोपुदुमातं बंदापलगेयोळबरेद सम्यक्छब्दमं कंडु संतुष्टचित्तनागि निजजननियनिदनार्बरेदरेंदु बेसगोळ्वुदुमा महानुभावे **निर्ग्रंथाचार्यरप्प** मदीयगुरुगळबरेदरेने मत्तमातनवरेल्लिर्परेने गिरिगुहादिगळोळिर्परेंदोडातन वरनरसुत्तं बंदु विविक्तमुं परमरम्यमुं भव्यसत्त्वविश्रामास्पदमुमप्पुदोंदानु-मोंदाश्रमस्थानदोळमुनिपरिषन्मध्यदोळसुखासीननं परमोपशमाद्यनेकगुणालंकृत-गात्रनं युक्त्यागमकुशलनं परहितप्रतिपादनैककार्यनुमार्यानिषेव्यनं **निर्ग्रन्था-चार्यवर्यनु**मप्प जैनाचार्यनं कंडु गुरुभक्तिपूर्वकं वंदिसि विनयदिंदात्महित-मावुदेंदोडाचार्यमोक्षमेने मत्तमातनेंतुटु मोक्षमदनेय्दुवुपायमावुदेंदोडाचार्यं निरवशेषनिराकृतकर्ममलकलंकनुमशरीरनुमप्पात्मन विमलाचिंत्यस्वाभाविक-ज्ञानादिगुणगणाव्याबाधसुखसंयुक्तात्यंतिकावस्थान्तरं मोक्षं, भेदाभेदरत्नत्रयं तत्प्राप्त्युपायमेंदु संक्षेपदिं पेळ्दु मत्तमा मार्गमं दशाधिकारंगाळिं विस्तारिसि पेळल्वेडि सर्वज्ञसिद्धिपूर्वकं मंगळार्थमिष्टदेवतानमस्कारमं माडिदपर् :—

मोक्षमार्गस्य नेतारं भेत्तारं कर्मभूभृताम् ।
ज्ञातारं विश्वतत्त्वानां वन्दे तद्गुणलब्धये ॥" इति ॥

३. श्रुतसागरटीकायाम्—

"अथ श्रीमदुमास्वामिभट्टारकः कलिकालगणधरदेवो महामुनि-मण्डलिसंसेवितपादपद्मः कस्मिंश्चिदाश्रमपदे सुस्थितो मनोवाक्कायसरलतया वाचंयमोऽपि निजमूर्त्या साक्षान्मोक्षमार्गं कथयन्निव सर्वप्राणिहितोपदेशैककार्यः समार्यजनसमाश्रितः **निर्ग्रन्थाचार्यवर्यं** अतिनिकटीभवत्परमनिर्वाणेनासन्न-भव्येन द्वैपायकनाम्ना भव्यवरपुण्डरीकेण संपृष्टः 'भगवन्! किमात्मने

हितामिति '. भगवानपि तत्प्रश्नवशात् 'सम्यग्दर्शनज्ञानचारित्रलक्षणोपलक्षितसन्मार्गसम्प्राप्यो मोक्ष' इति प्रतिपादयितुकाम इष्टदेवताविशेषं नमस्करोति—

मोक्षमार्गस्य नेतारं भेत्तारं कर्मभूभृताम् ।
ज्ञातारं विश्वतत्त्वानां वन्दे तद्गुणलब्धये ''॥

इति चोल्लेखाः समुपलभ्यन्ते ॥

उपर्युक्तद्वितीयसमुल्लेख एव संस्कृतभाषायामनूदितः कोल्लापुरनिवासिना श्रीकलाप बरमप्पशर्मणा मुद्रितसर्वार्थसिद्धि ग्रन्थस्य प्रस्तावनायां ; मुम्बापुर्यां मुद्रितस्य तत्त्वार्थश्लोकवार्तिकग्रन्थस्य प्रस्तावनायां तस्य सम्पादकेन च ; तथा श्रीजगमन्दरलालजैनेन विरचिततत्त्वार्थसूत्रव्याख्याया आंग्लभाषामय्यां प्रस्तावनायां च । एतेषु ग्रन्थोत्पत्तिहेतुसमुल्लेखेषु परस्परं सादृश्यं किंचिद्वैसादृश्यं च दृश्यते ॥

## मङ्गलाचरणश्लोकविचारः

तत्त्वार्थसूत्रग्रन्थस्यैतस्य मङ्गलाचरणश्लोकसम्बन्धे विसंवादो दृश्यते । ग्रन्थस्यादौ तत्कर्त्रा श्रीमदुमास्वामिना "मोक्षमार्गस्य नेतारं" इत्यादिश्लोकेन मङ्गलमनुष्ठितम् । किं तु केषाञ्चिदिदमास्ति मतं यदकलङ्कदेवविद्यानन्दाचार्यादिभिः स्वरचिततत्त्वार्थराजवार्तिकालङ्कार, तत्त्वार्थश्लोकवार्तिकालङ्कारादिग्रन्थेषु तथानुल्लिखितत्वादव्याख्यातत्वाच्च नायं ग्रन्थकर्तृनिबद्धो मङ्गलश्लोकोऽपि तु सर्वार्थसिद्धिटीकाग्रन्थारम्भे अस्य श्रीपूज्यपादेनोल्लिखितत्वात्तदीय एवायमिति, सूत्रग्रन्थकृता तु प्रथमसूत्रेण वस्तुनिर्देशात्मकं मङ्गलं कृतमिति च । किंतु न तन्मङ्गलश्लोकस्य वृत्तिः कृता तत्त्वार्थराजवार्तिककारादिभिरपि तु सूत्राणामेवेत्यवगम्यते तत्त्वार्थश्लोकवार्तिककारेण विद्यानन्देनाप्तपरीक्षाटीकायां "किं पुनस्तत्परमेष्ठिनो गुणस्तोत्रं शास्त्रादौ सूत्रकाराः प्राहुरिति निगद्यते—मोक्षमार्गस्य नेतारं भेत्तारं कर्मभूभृताम् । ज्ञातारं विश्वतत्त्वानां वन्दे तद्गुणलब्धये" इति पृथक्कृतोल्लेखदर्शनात्तन्मङ्गल-

श्लोकस्य व्याख्यातत्वाच्च। अत्र भगवतो मोक्षमार्गप्रणेतृत्वादीनि यान्य-साधारणविशेषणान्युपात्तानि तेषां सार्थक्यमेवं प्रत्यपादि प्रश्नपूर्वकं तस्मिन् ग्रन्थे—किमर्थं पुनरिदं **भगवतोऽसाधारणं** विशेषणं मोक्षमार्गप्रणेतृत्वं कर्म-भूभृद्भेतृत्वं विश्वतत्त्वज्ञातृत्वञ्चात्र प्रोक्तं भगवद्भिरित्याह—

इत्यसाधारणं प्रोक्तं विशेषणमशेषतः।
परसङ्कल्पिताप्तानां व्यवच्छेदप्रसिद्धये ॥ २ ॥
ज्ञाता यो विश्वतत्त्वानां स भेत्ता कर्मभूभृम्।
भवत्येवाऽन्यथा तस्य विश्वतत्त्वज्ञता कुतः ॥ ७ ॥"

किञ्च भगवद्भिः सूत्रकारैर्विरचितमिमं मङ्गलश्लोकमनुसृत्य स्वामि-समन्तभद्राचार्यैराप्तमीमांसाग्रन्थः, अकलङ्कदेवैरष्टशतीग्रन्थः, विद्यानन्दाचार्ये-णाप्तपरीक्षाग्रन्थश्च व्यरचि। तथा चोक्तमाप्तपरीक्षायां विद्यानन्दस्वामिना—

इति तत्त्वार्थशास्त्रादौ मुनीन्द्रस्तोत्रगोचरा।
प्रणीताप्तपरीक्षेयं कुविवादनिवृत्तये ॥ १२४ ॥

अष्टसहस्र्यामिदमपि वाक्यजालं दरीदृश्यते ११४ तमश्लोकस्य व्याख्यायां "**सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्ग** इति सम्यगुपदेशः, तदन्यतमापाये मोक्षस्यानुपपत्तेः समर्थनात्। सम्याग्मिथ्योपदेशार्थविशेषप्रति-पत्तये शास्त्रारम्भेऽभिष्टुतस्याप्तस्य **मोक्षमार्गप्रणेतृतया, कर्मभूभृद्भेतृतया, विश्वतत्त्वानां ज्ञातृतया** च भगवदर्हत्सर्वज्ञस्यैवान्ययोगव्यवच्छेदेन व्यव-स्थापनपरा परीक्षेयं विहिता"

एवमेव कर्णाटकशब्दानुशासने "मोक्षमार्गनेतृत्व, विश्वतत्त्वज्ञातृत्व, कर्मभूभृद्भेतृत्वानि यथापूर्वं कारणकार्यरूपाणि यथोत्तरं च साधनसाध्यरूपाणि परमात्मनोऽसाधारणविशेषणानि प्रवचनपारावारपारगामिभिर्भगवदुमास्वाति-पादाचार्यैरुपपादितानि। यथा—

मोक्षमार्गस्य नेतारं भेत्तारं कर्मभूभृताम्।
ज्ञातारं विश्वतत्त्वानां वन्दे तद्गुणलब्धये ॥"

इति भट्टाकलङ्केन ॥

उपर्युक्तरीत्या तत्त्वप्रदीपिकायां बालचन्द्रमुनिना श्रुतसागरीटीकायां श्रुतसागरेण अष्टसहस्रीटिप्पणे लघुसमन्तभद्रेण च सुस्पष्टमुक्तत्वात् मङ्गलश्लोकोऽयं सूत्रकृता भगवदुमास्वामिनैवोपज्ञात इति' निश्चयः, न तु सर्वार्थसिद्धिटीकाकारेण श्रीपूज्यपादेन । अतः कोल्लापुरवासिना श्रीकलाप्प भरमप्पपण्डितेन मुद्रितसर्वार्थसिद्धिग्रन्थस्य भूमिकायां "सर्वार्थसिद्धिग्रन्थारम्भे 'मोक्षमार्गस्य नेतारम्' इति श्लोको वर्तते । स तु सूत्रकृता भगवदुमास्वातिनैव विरचित इति श्रुतसागराचार्यस्याभिमतमिति तत्प्रणीतश्रुतसागर्याख्यवृत्तितः स्पष्टमवगम्यते । तथापि श्रीपूज्यपादाचार्येणाव्याख्यातत्वादिदं श्लोकनिर्माणं न सूत्रकृतः, किंतु सर्वार्थसिद्धिकृत एवेति **निर्विवादं** (?) तथा च तेषां सूत्राणां द्वैपायकप्रश्नोपर्युत्तरत्वेन विरचनं तैरेव क्रियते, तथा च उत्तरे वक्तव्ये मध्ये मङ्गलस्याप्रस्तुतत्वाद्वस्तुनिर्देशस्यापि मङ्गलत्वेनाङ्गीकृतत्वाच्चोपरितनसिद्धान्त एव **दार्ढ्य**माप्नोतीत्यूह्यं सुधीभिः" इति यदुक्तं "निर्विवादं" "दार्ढ्यमाप्नोति" इति निश्चितार्थद्योतकपदप्रयोगेन तद्भ्रान्तिजन्यमन्येषां भ्रान्तिजनकमिति च ज्ञेयं विपश्चिद्भिः । अत्र प्राश्निकस्य प्रश्नानुरोधेन मोक्षशास्त्रग्रन्थरचनावसरे मोक्षमार्गनेतृत्वादिगुणोपेतस्य भगवतो गुणस्तोत्ररूपमङ्गलस्याप्रस्तुतत्वमुक्त्वा पुनर्वस्तुनिर्देशस्य तत्र मङ्गलत्वाभ्युपगमः, श्रीविद्यानन्देन "श्रीमत्तत्त्वार्थशास्त्राद्भुतसलिलनिधेः" इति सलिलनिधिनोपमितस्य महाशास्त्रस्यारम्भे भगवद्गुणस्तोत्ररूपमङ्गलस्याप्रस्तुतत्वकथनं च न विचारक्षमम् ॥

एवमुपर्युक्तप्रमाणनिवहैः "मोक्षमार्गस्य नेतारं भेत्तारं कर्मभूभृताम् । ज्ञातारं विश्वतत्त्वानां वन्दे तद्गुणलब्धये" इत्ययं मङ्गलश्लोकस्तत्त्वार्थसूत्रकृता श्रीमदुमास्वामिनैव प्रणीत इति निष्कर्षः ॥

## तत्त्वार्थसूत्रव्याख्याकारास्तद्व्याख्याग्रन्थाश्च

भगवदुमास्वामिप्रणीततत्त्वार्थसूत्रग्रन्थस्य दिगम्बरश्वेताम्बरोभयजैना-

म्नायावलम्बिभिरपि बहवो व्याख्याग्रन्था विरचिता इत्ययमनल्पानन्दावहो विषयः । यावन्तोऽस्य ग्रन्थस्य व्याख्याग्रन्था दृष्टिपथमुपयान्ति न तावन्तोऽन्यस्य कस्यापि जैनग्रन्थस्येति जानीमः । तत्र संस्कृतभाषायां स्वामिसमन्तभद्रप्रणीतगन्धहस्तिमहाभाष्य, पूज्यपादाचार्योपनिबद्धसर्वार्थ-सिद्धिव्याख्या, अकलङ्कदेवविरचिततत्त्वार्थराजवार्त्तिकालङ्कार, विद्यानन्दा-चार्यग्रथिततत्त्वार्थश्लोकवार्त्तिकालङ्कार, श्रुतसागरसूरिविलिखितश्रुतसागरी-टीका, भास्करनन्दिरचितसुखबोधिनीटीका, विबुधसेनचन्द्राचार्यप्रणीततत्त्वार्थ-टीका, योगीन्द्रदेवकृततत्त्वप्रकाशिकाटीका, योगदेवग्रथिततत्त्वार्थवृत्ति-टीका, लक्ष्मीदेवविरचिततत्त्वार्थटीका, अभयनन्दिसूरिलिखिततात्पर्यतत्त्वार्थ-टीका, कर्णाटकभाषायां बालचन्द्रमुनिप्रणीततत्त्वरत्नप्रदीपिकादयो बहवो व्याख्याग्रन्था विद्यन्ते । तेष्वन्यतमस्यास्य तत्त्वार्थसुखबोधिनीव्याख्याग्रन्थस्य प्रस्तावनायां तेषु तत्त्वार्थसूत्रव्याख्याकारेषु सुप्रसिद्धादिगम्बरजैनाचार्ये-ष्वाद्ययोः स्वामिसमन्तभद्राचार्यपूज्यपादाचार्ययोर्ययोर्जीवितकालादिविषयेषु भिन्नाभिप्रायो जागर्ति विद्वत्समाजे तयोः किञ्चित्परिचयकथनमुचितमुत्पश्यामः॥

## श्रीस्वामिसमन्तभद्राचार्यः

एतन्नामानः केचन जैनाचार्या बभूवुः । तेषु स्वामिपदोपेतः अस्य तत्त्वार्थसूत्रग्रन्थस्य टीकाकारश्च श्रीसमन्तभद्रः प्रथम इति कतिषुचिच्छासनेषु ग्रन्थेषु च तथोल्लेखदर्शनात् विज्ञायते । सोऽयं फणिमण्डलान्तर्गतोरगपुराधि-पस्य "शान्तिवर्म" नामा सूनुरासीत् । देवचन्द्रकृतराजावलीकथायां योऽय-मुल्लिखित उत्कलिकाग्रामः स तु उरगपुरान्तर्गतः स्यादिति वितर्क्यते ॥

समन्तभद्रस्वामिनो मातापित्रोर्नामनी, धर्मगुरोर्नाम, बाल्यजीवन-विवरणं च न वयमवबोद्धुमशकाम । तस्याद्भुतपाण्डित्यावलोकनेन स तु काव्यालङ्कारतर्कव्याकरणसिद्धान्तादिविद्यार्जनेनैव बाल्यजीवनं व्यतीत्या-विवाहित एव निर्ग्रन्थमुनिर्बभूवेति संभाव्यते ॥

महातपोधनेनापि महानुभावेनापि पूर्वोपार्जितकर्मणः फलमनुभोक्तव्य-मेव भवति । यदा खलु समन्तभद्राचार्यो मुनिर्भूत्वा मणुवकनाम्नि ग्रामे कठिनतपोऽनुष्ठानपरोऽभूत्तदा तस्यासातावेदनीयकर्मोदयाद्दुर्निवार्यो [1] भस्मक-नामा भीमव्याधिः समजनि । सा च भुक्तमखिलं भस्मीकृत्य पुनर्दुस्सहक्षु-द्बाधामुपजनयाति स्म । क्षीरघृतादिरसपदार्थानां यथेच्छमुपसेवनेनैव सा व्याधि-रुपशाम्यति । तथा अनियमेन तत्सेवनं तु निर्ग्रन्थमुनेर्निषिद्धम् । तादृशसन्दर्भे—

"उपसर्गे दुर्भिक्षे जरसि रुजायां च निष्प्रतीकारे ।
धर्माय तनुविमोचनमाहुः सल्लेखनामार्याः ॥"

इत्युक्तसल्लेखनया—समाधिविधिना देहत्यागो विधेयः । स एको मार्गः । तद्रोगोपशमनार्थं यथेच्छमानियमेन रसपदार्थानुपसेव्य मुनिधर्मा-त्प्रच्युतः तद्रोगोपशमनानन्तरं पुनर्दीक्षां गृहीत्वा निर्दुष्टतपोनुष्ठानमन्यो मार्गः । अनयोः प्रथममार्ग एव श्रेयान्परिग्राह्यश्चेति मत्वा श्रीसमन्तभद्रा-चार्यः स्वगुरुसविधमेत्य स्वव्याधिवार्तां निवेद्य तस्मै, सल्लेखनां परिगृहीतु-माज्ञां संप्रार्थयामास । स च गुरुस्तदा सुष्ठु पर्यालोच्य समन्तभद्रस्वामिनं प्रति "हे ! समन्तभद्र, भाविकाले भवता धर्मोद्धारो भविता, अतस्त्वमुपभुङ्क्ष्व यत्र कुत्रापि यथेच्छम् । यदा रोगोपशान्तिर्भवति तदा पुनर्दीक्षां गृहाण" इत्यादिदेश । समन्तभद्रस्वामिनस्तदा मुनिधर्मत्यागे इच्छाभावेऽपि स्वस्य जीवितेन धर्मोन्नतिर्भविष्यतीत्यनुसन्धाय मुनिधर्मं विहाय स तदा भस्मा-च्छादिततनुर्भूत्वा काञ्चीपुरमेत्य तस्याधिपं शिवकोटिमहाराजं दृष्ट्वाऽऽशिषं प्रयुञ्जानः तस्थौ । तदा शिवकोटिमहाराजः समन्तभद्रस्वामिनो भद्राकृति-मनुपमवाग्मितामपि संवीक्ष्य विसिष्मिये ॥

---

[1] वातपित्तकफनाडीनां सञ्चारवैपरीत्यादनारोग्यमुत्पद्यतेऽङ्गे । तासु नाडीषु यदा कफनाडी कृशीभूय वातापित्तनाड्योः प्रकोपो भवति तदा जठराग्निः प्रज्वलितः सन् भस्मक-व्याधिमुत्पादयति.

ततस्तस्मादाचार्याद्धर्मतत्त्वं श्रुत्वा शिवकोटिमहाराजः संसारशरीरभोगनिर्विण्णः स्वसुताय श्रीकण्ठनाम्ने राज्यं दत्वा स्वानुजेन शिवायनेन सार्धं तस्यैव मुनेर्निकटे मुनिदीक्षां गृहीत्वा तपस्तप्त्वा जैनागमाभ्यासं च कृत्वा शिवकोट्याचार्य इति प्रख्यातो बभूव । स च रत्नमालाद्यनेकग्रन्थान्व्यरचयत् । श्रीसमन्तभद्रस्तु भस्मकव्याधिनिवृत्त्यनन्तरं पुनर्दीक्षितः कठिनतपस्तप्त्वा चतुरङ्गुलचारणत्वं सम्प्राप ॥

श्रीसमन्तभद्राचार्यो यदा करहाटकमुपजगाम तदा तन्नायकं राजानं प्रति यदुक्तं तेन तत् श्रवणबेळ्गुळस्थित ६७ तमशिलालेखगतानेन श्लोकेनावबुध्यते—

"पूर्वं पाटलिपुत्रनगरे भेरी मया ताडिता
पश्चान्मालवसिन्धुठक्कविषये काञ्चीपुरे वैदिशे ।
प्राप्तोऽहं करहाटकं बहुभटं विद्योत्कटं सङ्कटम्
वादार्थी विचराम्यहं नरपते शार्दूलविक्रीडितम् ॥"

## श्रीसमन्तभद्रस्य पाण्डित्यम्

समन्तभद्रस्वामिनं तस्याऽसमपाण्डित्यं चानेक [1]आचार्याः कवयश्च स्वीयग्रन्थेषु बहुगौरवपूर्वकं स्तुवन्ति स्म । स च महात्मा महापद्माद्भाविकालचतुर्विंशतितीर्थङ्करेष्वन्तिमो भविष्यतीत्यधो विलिख्यमानैरुल्लेखैर्विज्ञायते ॥

---

1 "स्वामी समन्तभद्रो मेऽहर्निशं मानसेऽनघः ।
तिष्ठताज्जिनराजोद्यच्छासनाम्बुधिचन्द्रमाः ॥"

—रत्नमालाग्रन्थे शिवकोट्याचार्यः.

"नमः समन्तभद्राय महते कविवेधसे ।
यद्वचो वज्रपातेन निर्भिन्नाः कुमताद्रयः ॥ ४३ ॥
कवीनां गमकानां च वादिनां वाग्मिनामपि ।
यशः सामन्तभद्रीयं मूर्ध्नि चूडामणीयते ॥ ४४ ॥"

—महापुराणे भगवज्जिनसेनाचार्यः.

तथाहि—

"श्रीमूलसङ्घव्योमेन्दुर्भारते भावितीर्थकृत् ।
देशे समन्तभद्राख्यो मुनिर्जीयात्पदर्द्धिकः ॥"

—विक्रान्तकौरवनाटके हस्तिमल्लः.

"आ भावितीर्थकररप्प समन्तभद्रस्वामिगळु" इत्यादि ।

—राजावलीकथायां देवचन्द्रः.

"अट्ठ हरी णव पडिहरि चक्कि चउक्कं च एय बलभद्दो ।
सेणिय समन्तभद्दो तित्थयरा हुन्ति णियमेण ॥"

—आकरोऽस्या गाथाया नोपलब्धः

—अष्टौ नारायणा, नवप्रतिनारायणाः, चत्वारश्चक्रवर्तिनः, एको बलभद्रः, श्रेणिकः, समन्तभद्रश्चेत्येते नियमेन तीर्थङ्करा भविष्यन्तीत्यस्या गाथाया भावार्थः । संसारे न काप्यस्ति श्रेष्ठपदवी या तीर्थङ्करपदव्याः समानतामाप्नुयात् । अतो महात्मनस्तस्य श्रीसमन्तभद्रभदन्तस्य महिमात्मपवित्रत्वं चावाग्गोचरतामाप्नोति ॥

---

समन्तभद्रो भद्रार्थो भातु भारतभूषणः ।
देवागमेन येनात्र व्यक्तो देवागमः कृतः ॥

—पाण्डवपुराणे शुभचन्द्राचार्यः.

अवटुतटमटति झटिति स्फुटपटुवाचाटधूर्जटेर्जिह्वा ।
वादिनि समन्तभद्रे स्थितवति तव सदसि भूप कास्थाऽन्येषाम् ॥

—मल्लिषेणप्रशस्तिः.

समन्तभद्रोऽजनि भद्रमूर्तिस्ततः प्रणेता जिनशासनस्य ।
यदीयवाग्वज्रकठोरपातश्चूर्णीचकार प्रतिवादिशैलान् ।

—श्रवणबेलुगुळस्थिरः २५८तमः शिलालेखः.

सरस्वतीस्वैरविहारभूमयः समन्तभद्रप्रमुखा मुनीश्वराः ।
जयन्ति वाग्वज्रनिपातपाटितप्रतीपराद्धान्तमहीध्रकोटयः ॥

—गद्यचिन्तामणौ वादीभसिंहसूरिः.

एवमपरेऽपि बहवो जैनाचार्या वसुनन्दिसिद्धान्तचक्रवर्ति, शुभचन्द्राचार्य, वीरनन्द्याचार्यप्रभृतयः श्रीसमन्तभद्रस्वामिनं स्तुत्वा तस्मिन् स्वीयां भक्तिं प्रकटीचक्रुः.

अत्र श्रीसमन्तभद्राचार्यो भविष्यत्तीर्थङ्करेष्वन्तिमो भविष्यतीत्येवोक्तत्वात् तीर्थङ्करप्रकृतेर्बन्धमपि तस्मिन्नेव जन्मन्युपेदित्यनुक्तविषयमवबोद्धुं नावकाशः। स तस्या बन्धं पूर्वस्मिन् जन्मान्तरे केवलिनः श्रुतकेवलिनो वा सान्निध्ये उपेयात्। कस्मिन् ग्रन्थे प्रोक्तोऽयं विषय इत्यन्वेषणीयः। यद्यलभ्यलुप्तग्रन्थेषूक्तः स्यात् !

## श्रीसमन्तभद्राचार्यस्य समयविचारः

स्वामिसमन्तभद्राचार्यपुङ्गवस्य समयसूचको न कोऽपि समुपलभ्यते साक्षादुल्लेखः। अद्यावधि बि. एल्. रैस्महाशयप्रभृतयो यावन्तो विपश्चितस्तस्य समयमुल्लिलिखुस्ते इतस्ततस्समुपलब्धैरितरैरेव साधनैर्यथामतिविभवमुपचख्युः। ते तु नानुवर्तन्ते परस्परं [1]प्रत्यनीकतया॥

बि.एल्. रैस्महाशयः स्वीयमुल्लेखं जैनपरम्परागताख्यायिकया, भण्डार्कर्महाशयलिखितसंस्कृतकोशसङ्ग्रहस्य विवरणेन (Report), श्रवणबेळुगुळस्थित ५४तमशिलालेखेन च समर्थयति। तेषामुल्लेखानां प्रमाणत्वनिर्णयः समीचीनसाधनमन्तरेण न भवितुमर्हति। अतस्तेषां प्रमाणत्वसाधकानि कानिचित्साधनान्यधो विलिख्यन्ते—

१. तत्त्वार्थसूत्रकर्ता श्रीमदुमास्वाम्याचार्यो विक्रमाब्दे एकोत्तरशततमे (क्रिस्ताब्दे ४३तमे) नन्दिसङ्घपट्टमारूढः तस्मिंश्चत्वारिंशद्वर्ष-

---

[1] १. जैनपरम्परागताख्यायिकया समन्तभद्राचार्यस्य समयः शालिवाहनशकाब्दाः ६०, क्रिस्ताब्दाः १३८ इति, क्रिस्ताब्दप्रथमशतकं द्वितीयशतकं वा स्यादिति च समुल्लिलेख श्रवणबेळुगुळशासनपुस्तकस्य प्रस्तावनालेखे बि. एल्. रैस्महाशयः.

२. समन्तभद्राचार्यः क्रिस्ताब्दे (४००) चतुर्थशतके बभूवेत्यौहतकविचारितप्रथमभागे श्रीनरसिंहाचार्यः.

३. समन्तभद्राचार्यः प्रायः (६००) षष्ठशतके क्रिस्ताब्दे बभूवेत्युल्लिलेख सतीशचन्द्रविद्याभूषणमहाशयः History of the Medieval School of Indian Logic नामके पुस्तके.

एतेषूल्लेखेषु परस्परमुद्दिष्टशताब्दानां, प्रथमतृतीययोश्चतुःशताब्दानां चान्तरं परिदृश्यते.

पर्यन्तमासीदित्युल्लेखः समुपलभ्यते । श्रवणबेळुगुळास्थितचतुःषष्टितमशिलालेखगतश्लोकाभ्यामधोविलिख्यमानाभ्यामुमास्वाम्याचार्यस्य शिष्यो बलाकपिञ्छाचार्य इति. तस्यामाचार्यपरम्परायां श्रीसमन्तभद्राचार्यः समजनीति चावगम्यते । तथा हि—

"श्रीगृध्रपिञ्छमुनिपस्य बलाकपिञ्छः
शिष्योऽजनिष्ट भुवनत्रयवर्तिकीर्तिः ।
चारित्रचञ्चुरखिलावनिपालमौलि-
मालाशिलीमुखविराजितपादपद्मः ॥
एवं महाचार्यपरम्परायां स्यात्कारमुद्राङ्कितत्त्वदीपः ।
भद्रः समन्ताद्गुणतो गणीशः समन्तभद्रोऽजनि वादिसिंहः" ॥

जीवति स्म उमास्वाम्याचार्यः क्रिस्तीयत्र्यशीत्यब्दपर्यन्तम् । भगवदुमास्वाम्याचार्यबलाकपिञ्छाचार्यपरम्परायां श्रीसमन्तभद्राचार्योऽजनिष्टेत्युक्तत्वात् तस्मिन् बलाकपिञ्छाचार्यस्य साक्षात्परम्परया वा शिष्यत्वाभ्युपगमे नानुपपत्तिः ॥

२. श्रवणबेळुगुळास्थितचतुःपञ्चाशत्तमाच्छिलालेखात् कोङ्गणिवर्मगङ्गराजस्य समयः १८८तमः क्रिस्ताब्द इत्यवगम्यते । तस्य समकालिकात् सिंहनन्दिमुनेः पूर्वं श्रीसमन्तभद्राचार्यः समुल्लिखितः ॥

३. श्रवणबेळुगुळास्थित ४०तमे[1] शिलालेखे श्रीसमन्तभद्राचार्यानन्तरं पूज्यपादाचार्यस्योल्लेखदर्शनात् स्वामिसमन्तभद्रकृतगन्धहस्तिमहाभाष्यगतवाक्यमुद्धृतं सर्वार्थसिद्ध्यां पूज्यपादाचार्येणेति वक्ष्यमाणत्वात्, पूज्यपादाचार्यकृतजैनेन्द्रव्याकरणे "चतुष्टयं समन्तभद्रस्य ५–४–१४०" इत्यस्मिन्

---

[1] ततः (श्रीसमन्तभद्राचार्यानन्तरं)—
यो देवनन्दिप्रथमाभिधानो बुद्ध्या महत्या स जिनेन्द्रबुद्धिः ।
श्रीपूज्यपादोऽजनि देवताभिर्यत्पूजितं पादयुगं यदीयम् ॥
जैनेन्द्रं निजशब्दभागमतुलं सर्वार्थसिद्धिः परा ।
सिद्धान्ते निपुणत्वमुद्धकवितां जैनाभिषेकः स्वकः ।
छन्दः सूक्ष्मधियं समाधिशतकं स्वास्थ्यं यदीयं विदा-
माख्यातीह स पूज्यपादमुनिपः पूज्यो मुनीनां गणैः ॥

सूत्रे श्रीसमन्तभद्राचार्योल्लेखदर्शनाच्च पूज्यपादाचार्यः श्रीसमन्तभद्राचार्यादर्वाचीन इति विज्ञायते । पूज्यपादाचार्यस्य समयस्तु शालिवाहनशकत्रिशततमाब्द इत्युत्तरत्र वक्ष्यते ॥

एवमुपर्युक्तैस्त्रिभिः कारणैः श्रीसमन्तभद्राचार्यस्य क्रिस्ताद्वितीयशताब्दभावित्वं नोपैत्यसामञ्जस्यमिति मन्यामहे । अस्य स्वामिसमन्तभद्रकालस्य (१३८) पूज्यपादाचार्यकालस्य (३७८) च मध्ये श्रीसमन्तभद्राचार्यस्य साधनाभावादनवगतशेषजीवितकालः समाविष्ट इत्यवसेयम् ॥

## श्रीसमन्तभद्राचार्यविरचितग्रन्थविचारः

लोकानुग्रहार्थं यानि ग्रन्थरत्नानि तेन महात्मना विरचितानि तेषु कानिचिन्निर्दिशामः । तेनाचार्यप्रवरेण (१) रत्नकरण्डश्रावकाचारः (२) स्वयम्भूस्तोत्रम् (३) आप्तमीमांसा (४) युक्त्यनुशासनम् (५) जिनस्तुतिशतकम् (६) जीवसिद्धिः (७) तत्त्वानुशासनम् (८) कर्मप्राभृतटीका (९) गन्धहस्तिमहाभाष्यमित्यादयो ग्रन्थाः प्रणीता इत्यवगम्यते कैश्चिदुल्लेखैः । तत्रापञ्चमग्रन्थं पूर्वपूर्वग्रन्थानामधिकप्रचारोऽवलोक्यते । प्रसिद्धिस्तु समेषामस्त्येषां तद्विरचितग्रन्थानाम् । तत्र जीवसिद्ध्यादि ग्रन्थानामुल्लेख एव, न तु ते ग्रन्थाः समुपलभन्ते ॥

उपर्युक्तग्रन्थेष्वन्तिमं गन्धहास्तिमाहाभाष्यं तावदुमास्वाम्याचार्यविरचिततत्त्वार्थसूत्राणां विरचितो विस्तृतटीकाग्रन्थः । किंतु ग्रन्थोऽयं श्री समन्तभद्राचार्येण नैव विरचित इति केषांचिद्विदुषामास्ति धारणा । सा मिथ्येत्यधो विलिख्यमानैः प्रमाणैर्दृढीभवति ॥

तथा हि—

१. तत्त्वार्थसूत्रग्रन्थस्य पूज्यपादाचार्यकृतव्याख्यायां सर्वार्थसिद्ध्यां अकलङ्कदेवकृततत्त्वार्थराजवार्त्तिकालङ्कारे च "तथा चोक्तम्" इत्युपक्रम्य "सकलादेशः प्रमाणाधीनो विकलादेशो नयाधीनः" इत्यस्य वाक्यस्यो-

द्भूतत्वात्ताभ्यां पुरातनं व्याख्यानमेकमवर्ततेति विज्ञायते । तच्च समन्तभद्राचार्यविरचितगन्धहस्तिमहाभाष्यं, तस्यैव ग्रन्थस्य वाक्यमिदमिति च विजानीमः ॥

२. भास्करनन्द्याचार्यप्रणीततत्त्वार्थसुखबोधवृत्तेश्चतुर्थाध्यायगत—द्विचत्वारिंशत्तमसूत्रस्य व्याख्यायां "अपरः प्रपञ्चः सर्वस्य भाष्ये द्रष्टव्यः" इति, ग्रन्थस्यास्यैव पञ्चमाध्यायगताद्वितीयसूत्रस्य व्याख्यायां "अन्यस्तु विशेषो भाष्ये द्रष्टव्यः" इति ग्रन्थकर्ता भाष्यं परामृशति ॥

३. धर्मभूषणाचार्यविरचितन्यायदीपिकायां "तद्भाष्यं–तत्रात्मभूतमग्नेरौष्ण्यमनात्मभूतं देवदत्तस्य दण्डः" इति, "भाष्यं च—संशयो हि निर्णयविरोधी न त्ववग्रहः" इति. "तदुक्तं स्वामिभिर्महाभाष्यस्यादावात्ममीमांसाप्रस्तावे—सूक्ष्मान्तरितदूरार्थाः प्रत्यक्षाः कस्यचिद्यथा । अनुमेयत्वतोऽग्न्यादिरिति सर्वज्ञसंस्थितिः" इति च महाभाष्यस्य वाक्यान्युदाजहार ॥

४. क्रिस्ताब्दे ९७८तमे चामुण्डरायेण कर्णाटकभाषायां विरचिते त्रिषष्टिलक्षणपुराणे—

"अभिमतमागिरे तत्त्वा-
थंभाष्यमं तर्कशास्त्रमं बरेदु वचो- ।
विभवदिनिळेगेसेद समं-
तभद्रदेवर समानरेंबरुमोळरे ॥ ५ ॥"

इति समन्तभद्रस्य भाष्यं संस्मृतम् ॥

५. क्रिस्ताब्दे १२३०तमेऽवगतास्तित्वेन गुणवर्ममहाकविना कर्णाटकभाषायां विरचिते पुष्पदन्तपुराणे—

"बित्तरमागे सूत्रगतियिं मिगे पण्णिद गन्धहस्ति तों-
भत्तरुसासिरक्के शिवकोटिय कोटिविपक्षविद्विदु- ।

न्मत्तगजं मदं बरतु केय्येडेगोट्टुदेनल्के पेळ्वुदे ।
मत्ते समन्तभद्रमुनिराजनुदात्तजयप्रशस्तियं ॥ २२ ॥ "

अनेन गन्धहस्तिमहाभाष्यस्य श्लोकसङ्ख्या षण्णवतिसहस्रपरिमितेति चावगम्यते ॥

६. " तत्त्वार्थसूत्रव्याख्यानगन्धहस्तिप्रवर्तकः ।
स्वामी समन्तभद्रोऽभूद्देवागमनिदेशकः ॥ "

—विक्रान्तकौरवनाटके हस्तिमल्लकविः

७. " इह हि खलु पुरा स्वीयनिरवद्यविद्यासंयमसम्पदा गणधरप्रत्येकबुद्धश्रुतकेवलिदशपूर्वाणां सूत्रकृन्महर्षीणां महिमानमात्मसात्कुर्वद्भिर्भगवद्भिरुमास्वामिपादैराचार्यवर्यैरासूत्रितस्य तत्त्वार्थाधिगमस्य मोक्षशास्त्रस्य गन्धहस्त्याख्यं महाभाष्यमुपनिबध्नन्तः स्याद्वादविद्याग्रगुरवः श्रीस्वामिसमन्तभद्राचार्याः "

—अष्टसहस्रीटिप्पण्यां लघुसमन्तभद्राचार्यः.

तदेतद्गन्धहस्तिमहाभाष्यनामकं ग्रन्थरत्नमिदानीं दृष्टिपथं नोपयातीत्यतन्नितरां शोचनीयम्[1] ॥

## श्रीपूज्यपादाचार्यः

भगवदुमास्वाम्याचार्यविरचिततत्त्वार्थसूत्रग्रन्थस्य संस्कृतव्याख्याकारेषु श्रीपूज्यपादाचार्यो द्वितीयः । तेन सर्वार्थसिद्ध्याख्या सुगमसुन्दर-

---

[1] तुम्बुलूराचार्यैस्तत्त्वार्थसूत्रग्रन्थस्य कर्णाटकभाषायां षण्णवतिसहस्रश्लोकपरिमितं चूडामण्याख्यं महाभाष्यं व्यरचयदिति कर्णाटकशब्दानुशासनगत " न चैषा भाषा शास्त्रानुपयोगिनी । तत्त्वार्थमहाशास्त्रव्याख्यानस्य षण्णवतिसहस्रप्रमितग्रन्थसन्दर्भरूपस्य चूडामण्यभिधानस्य महाशास्त्रस्य " इत्यादिप्रमाणैरवगम्यते । किंतु तदपि नोपलभ्यत इत्येतदपि शोचनीयम् .

व्याख्या निरमायि । दिगम्बरजैनाचार्यपरम्परायां श्रीसमन्तभद्राचार्यानन्तरं सञ्जातेषु जैनाचार्येषु सुप्रसिद्धोऽयमाचार्यपुङ्गवः कर्णाटकजनपदान्तर्गत-कोळ्ळगालनगरनिवासिनो माधवभट्टनाम्नो विप्रस्य तस्य पत्न्याः श्रीदेव्या गर्भे समजनीति, जैनशास्त्राण्यधीत्य बालकाल एव जिनदीक्षामग्रहीदिति च राजावलीकथायां देवचन्द्रेण प्रत्यपादि ॥

पूज्यपादाचार्यस्य गुरुस्तस्य देवनन्दीति नामकरणमकरोदिति, ततो बुद्धिवैभवेन जिनेन्द्रबुद्धिरिति, वनदेवताभिः पूजितचरणत्वात्पूज्यपाद इति च विद्वद्भिः समभ्यधायीति श्रवणबेळुगुळस्थित २५४तमशिलालेखगतैकेन [1]श्लोकेन ६४तमशिलालेखगतैकेन [2]श्लोकेन चावगम्यते । एतेन तस्य मातापितृभ्यां ख्यापितं तस्य जन्मनामान्यदासीद्वा आहोस्वित् देवचन्द्र-कृतराजावलीकथोक्त्यनुसारेण "पूज्यपाद" इत्येव वासीदिति न विज्ञायते ॥

पूज्यपादाचार्यस्तपःप्रभावेनावाप्तमहौषधर्द्धिस्तद्बलेन विदेहक्षेत्रमेत्य साक्षाज्जिनदर्शनेन पूतगात्रश्च समभूदिति तस्य पादजलस्पर्शात्कालायसं कल्याणं सञ्जातमिति च श्रवणबेळुगुळस्थित२५८तमशिलालेखगतैकेन [3]श्लोकेनावगम्यते । स चाकाशमार्गेण विदेहक्षेत्रं गत्वा पुनरागमनवेलायां दिवाकरखरकिरणोष्मणा विगतदृष्टिर्भूत्वा घार्वाडप्रान्तस्थितबङ्कापुरीयशान्तीश्वर-

---

[1] प्रागभ्यधायि गुरुणा किल देवनन्दी बुद्ध्या पुनर्विपुलया स जिनेन्द्रबुद्धिः ।
श्रीपूज्यपाद इति चैष बुधैः प्रचख्ये यत्पूजितः पदयुगे वनदेवताभिः ॥

[2] यो देवनन्दिप्रथमाभिधानो बुद्ध्या महत्या स जिनेन्द्रबुद्धिः ।
श्रीपूज्यपादोऽजनि देवताभिर्यत्पूजितं पादयुगं यदीयम् ॥

[3] श्रीपूज्यपादमुनिरप्रतिमौषधर्द्धिर्जीयाद्विदेहजिनदर्शनपूतगात्रः ।
यत्पादधौतजलसंस्पर्शप्रभावात्कालायसं किल तदा कनकीचकार ॥

देवालये शान्त्यष्टकं विरच्य तत्पठित्वा दृष्टिमलभतेति तदष्टकगतैकेन [1] श्लोकेन देवचन्द्रकृतराजावली[2] कथया चावबुद्ध्यते ॥

श्रीपूज्यपादाचार्यस्य "जिनेन्द्रबुद्धिः" इत्यप्येकं नामासीदित्युपपादितं किलोपरि ? एतन्नामा बौद्धविद्वानप्येक आसीत् । स च जयादित्यवामनाभ्यां बौद्धविद्वद्भ्यां विरचितायाः काशिकावृत्तेः काशिकाविवरणपञ्चिकाख्यं न्यासं व्यरचयत् । अत्र जिनेन्द्रबुद्धिनामसादृश्यादेतन्न्यासकारः पूज्यपादार्य इति केचन विद्वांसो मन्वते । किं तु तद्भ्रान्तिजन्यम् । कुत इति चेत्–जयादित्यवामनाभ्यां काशिकावृत्तौ पूज्यपादाचार्यविरचितजैनेन्द्रव्याकरणात् कानि चित्सूत्राण्युद्धृतानि । तस्याश्च वृत्तेर्न्यासकारस्य पूज्यपादाचार्यादर्वाचीनत्वं सुस्पष्टं विज्ञायते ॥

श्रीपूज्यपादाचार्यो लोकस्य वाङ्मलमपाकर्तुं जैनेन्द्रव्याकरणं पाणिनीयव्याकरणस्य व्याख्यां शब्दावताराख्यां तर्कशास्त्रं छन्दश्शास्त्रं च, मनोमलमपाकर्तुं सर्वार्थसिद्ध्याख्यां तत्त्वार्थवृत्तिं समाधिशतकं इष्टोपदेशं जैनाभिषेकं च, भूरक्षणार्थं यन्त्रमन्त्रशास्त्रं, देहदोषनिवारणार्थं कल्याणकारकवैद्यग्रन्थं च प्रणिनायेति [3] कैश्चिदुल्लेखैर्विज्ञायते ॥

---

[1] "शान्तिं शान्तिजिनेन्द्र शान्तमनसस्त्वत्पादपद्माश्रयात् ।
सम्प्राप्ताः पृथिवीतलेषु बहवः शान्त्यार्थिनः प्राणिनः ॥
कारुण्यान्मम भाक्तिकस्य च विभो दृष्टिं प्रसन्नां कुरु ।
त्वत्पादद्वयदैवतस्य गदतः शान्त्यष्टकं भक्तितः ॥"

[2] "सूर्यकिरणोष्णदिं दृष्टि पोगे बंकापुरवेंबुदरोळ् शान्तीश्वररं वंदिसि शान्त्यष्टकमं पेळि दृष्टियं पडेदु."

[3] भरदिं जैनेन्द्रमं भासुरमेनलोरेदं पाणिनीयक्के टीकं
बरेदं तत्त्वार्थमं टिप्पणदिनरिपिदं यन्त्रमन्त्रादिशास्त्रो-
त्करमं भूरक्षणार्थं विरचिसि जसमं ताळेदं विश्वविद्या-
भरणं देवाळियाराधितपदकमळं पूज्यपादव्रतीन्द्रम् ॥ १४ ॥

—कर्णाटकधर्मपरीक्षाग्रन्थे वृत्तविलासः (११६० क्रि).

उपर्युक्तग्रन्थेष्वधुना शब्दावतार, तर्कग्रन्थ, यन्त्रमन्त्रशास्त्र, कल्याणकारकवैद्यग्रन्थ, जैनाभिषेक, छन्दःशास्त्र, सारसङ्ग्रह इत्येते ग्रन्था नोपलभ्यन्ते। तत्र कल्याणकारकवैद्यग्रन्थस्तु निखिलवैद्यलोके समादरणीयोऽस्ति। तस्य प्रयोगाः श्लोकाश्च केचन तत्र तत्र समुपलभ्यन्ते। श्रीपूज्यपादाचार्यस्तर्कव्याकरणसिद्धान्ताद्यखिलविषयेष्वपि निष्णात आसीदिति तद्विरचितग्रन्थावलोकनेनावबुध्यते ॥

## श्रीपूज्यपादाचार्यस्य समयविचारः

आचार्यपुङ्गवोऽयं क्रिस्ताब्दाद्यशीत्युत्तरचतुःशत (४८२) तमाब्दादारभ्य द्वाविंशत्युत्तरपञ्चशत (५२२) तमाब्दपर्यन्तं राज्यशासितुर्गङ्गवंशीयस्य दुर्विनीतस्य शिक्षागुरुरासीदिति, स चाचार्यवर्यस्तस्य समकालिक इति च हेब्बूरुशासनलेखादवगम्यत इति तच्छासनलेखमनुलिख्यैव जुगलकिशोरपण्डितेन "स्वामिसमन्तभद्र" प्रबन्धे समाधितमस्य

---

सकलप्राणिहितार्थवागे रुजेगळ् पिङ्गल्के कल्याणका-
रकमं वाय्मलमं तेरळ्चि कळेयल् जैनेन्द्रमं चित्तदों-
दु कळङ्कं किडिसल् समाधिशतयोगग्रन्थमं पेळ्दु स-
र्वकवीन्द्रस्तुतशुद्धचित्तनेसेदं श्रीपूज्यपादोत्तमं ॥ ७ ॥

—कर्णाटकसमयपरीक्षाग्रन्थे ब्रह्मदेवकविः (१२३० क्रि).

जैनेन्द्रं निजशब्दभागमतुलं सर्वार्थसिद्धिः परा
सिद्धान्ते निपुणत्वमुद्धकवितां जैनाभिषेकः स्वकः ।
छन्दः सूक्ष्मधियं समाधिशतकं स्वास्थ्यं यदीयं विदा-
माख्यातीह स पूज्यपादमुनिपः पूज्यो मुनीनां गणैः ॥ ४ ॥

—श्रवणबेळ्गुळस्थित ४०तमः शिलालेखः.

प्रस्तावनायां च प्रत्यपादि । स च स्वोक्तिं प्रमाणयितुं [1] कानि चित्प्रमाणान्युपस्थापयति स्म । तेषु हेब्बूरुशासनलेखनं प्रधानमन्येषामखिलानां मूलाधारभूतत्वात् । अतस्तदेवादौ विमृश्यते । तथाहि—

"श्रीमन्माधवमहाधिराजः, तस्य पुत्रः अविच्छिन्नाश्वमेधावभृथाभिषिक्तः श्रीमत्कदम्बकुलगगनगभस्तिमालिनः श्रीमत्कृष्णवर्ममहाराजस्य प्रियभागिनेयः जननीदेवताङ्कपर्यङ्क एवाधिगतराज्यः विद्वत्कविकाञ्चननिकषोपलभूतः असंभ्रमावनमितसमस्तसामन्तमण्डलः अविनीतनामा श्रीमत्कोङ्गणिमहाराजः, तस्य पुत्रः पुन्नाडराजप्रियपुत्रिकापुत्रः विजृम्भमाणशक्तित्रयोपनमितसमस्तसामन्तमण्डलः अन्दर्यालत्तूरुपौरुळरेपेन्नेगराद्यनेकसमरमुखमखहुतप्रधानपुरुषपशूपहारः विघसविहस्तीकृतकृतान्ताभिमुखः **शब्दावतारक रदेवभारतीनिबद्धबृहत्कथः** किरातार्जुनीयपञ्चदशसर्गटीकाकारः दुर्विनीतनामा" इत्यादि ॥

अस्यावशिष्टभागा विषयान्तरसूचकाः । एतच्छासनगतं 'शब्दावतारकारदेवभारतीनिबद्धबृहत्कथः' इति पदं दुर्विनीतस्य विशेषणम् [2] । कर्णाटककविचरितकारमहाशयैरप्येवमेव प्रत्यपादि । तथाहि—"दुर्विनीतः, गङ्गराजेष्वेतदभिधानवानेक आसीत् । केषु चित्ताम्रशासनेष्वस्य 'शब्दावतारकारः' 'देवभारतीनिबद्धबृहत्कथः' 'किरातार्जुनीयपञ्चदशसर्गटीकाकारः' इत्येषां विशेषणानां सत्त्वात् अनेन शब्दावतारग्रन्थो विरचित इति, गुणाढ्यस्य कर्णाटकभाषाबद्धा बृहत्कथा संस्कृतभाषायां परिवर्तितेति, भारविकृतकिरातार्जुनीयस्य पञ्चदशतमसर्गस्य टीका व्यलेखीति च विज्ञायते" इति । पूज्यपादाचार्येण

---

[1] 1. Mysore and Coorg—A Gezetteer प्रथमभागस्य 373तमं पृष्ठम्. [2] कर्णाटकभाषाभूषणस्य भूमिकायाः 12 तमंपृष्ठम्. [3] Coorg inscriptions भूमिकायास्तृतीयपृष्ठम्. [4] History of Kanarese Literature 25तमं पृष्ठम्. [5] कर्णाटककविचारितम् । एतेषु नैकेनापि पूज्यपादाचार्यस्य समुचितसमयः सिध्यति.

[2] अतो दुर्विनीतेनाप्येकः शब्दावतारनामकग्रन्थो निरमायीति स्फुटमवगम्यते.

पाणिनीयव्याकरणस्य 'शब्दावतार' नामको व्याख्याग्रन्थो विरचित इत्युक्तमेवोपरि । अस्मात् 'शब्दावतार' नामसादृश्यात् रैस्महाशयो हेब्बूरुशासनगत "शब्दावतारकार" पदं, युद्दुर्विनीतस्य विशेषणं, पूज्य पादाचार्यवाचकमिति मत्वा "पूज्यपादाचार्यो दुर्विनीतस्य शिक्षागुरुरासी-दित्युक्तं Tm. 23 (तुंकूरुपान्तीय) शासने (हेब्बूरुशासने)" इति समुल्लिलेख। तच्च भ्रान्तिजन्यम् ॥

एवं हेब्बूरुशासने पूज्यपादाचार्यस्योल्लेखाभावेऽपि तच्छासनपङ्क्तेर्विपरी-तार्थमधिगच्छतां विमर्शकानामुक्तीर्विश्वस्य पूज्यपादाचार्यस्य दुर्विनीतस्य च गुरुशिष्यभावं समकालिकत्वं च परिकल्प्य "पूज्यपादचरितस्य राजावलीकथा-याश्चोल्लेखाः समयादिदृष्ट्या न विश्वास्या" इत्युक्त्वा तान् दूरीकृत्य च पूज्य-पादाचार्यो दुर्विनीतस्य शिक्षागुरुः समकालिकश्च समभूदिति यत्प्रतिपादितं कैश्चिन्न तद्विचारक्षमम् ।।

देवनन्दिनो दर्शनसारे—

"सिरिपुज्जपादसीसो दाविडसङ्घस्स कारगो दुट्ठो ।
णामेण वज्जणन्दी पाहुडवेदी महासत्तो ॥ २४ ॥

पञ्चसए छव्वीसे विक्कमरायस्स मरणपत्तस्स ।
दक्खिणमहुराजादो दाविडसङ्घो महामोहो ॥ २५ ॥"

इत्येतद्गाथाद्वयं समुपलभ्यते । पूज्यपादाचार्यस्य शिष्यो वज्रनन्दिमुनिः ५२६तमे विक्रमाब्दे (४६८तमे क्रिस्ताब्दे) द्राविडसङ्घं स्थापयामासेत्यस्य गाथायुगलस्यार्थः । एतेन पूज्यपादाचार्यस्य द्राविडसङ्घस्थापनाकालात्पूर्व-भावित्वसिद्धेः स च तत्सङ्घस्थापनाकालादुत्तरकालभाविनो दुर्विनीतस्य सम-कालिकः शिक्षागुरुश्चासीदिति यदुक्तं जुगलकिशोरपण्डितप्रभृतिभिः कैश्चित्तन्न संघटते । तर्हि पूज्यपादाचार्यस्य कोऽयं समय इत्यारेकायाम्—

(१) उपर्युक्तकथनेन क्रिस्तद्वितीयशताब्दीयात् समन्तभद्राचार्यात् पूज्यपादाचार्यस्यार्वाचीनत्वात् । (२) क्रिस्ताब्दे ४६८तमे द्राविडसङ्घ-

स्थापकात् वज्रनन्दिमुनेस्तस्य गुरोः पूज्यपादाचार्यस्य पूर्वभावित्वात्। (३) राजावलीकथायां देवचन्द्रेण पूज्यपादाचार्यस्य समयः शालिवाहन-शकाब्दः ३००तम (क्रिस्ताब्दः ३७८तम) इत्युक्तत्वात्। (४) पूज्य-पादचरित्रेप्यस्यैव समयस्योल्लेखदर्शनात् (५) जुगमंदरलालजैनिमहा-शयेनाङ्गलभाषायां सम्पादितस्य तत्त्वार्थसूत्रस्य प्रस्तावनायां—"His date of birth, as stated in the pattavalis, is the 10th of Jeth Sudi, 308 Saka year"* इत्युक्तत्वात्। (६) बाधकप्रमाणाबाधित-त्वाच्च पूज्यपादाचार्यस्य समयः क्रिस्ताब्दचतुर्थशतकस्यान्तिमभाग इति सिध्यति॥

## श्रीभास्करनन्दी

तत्त्वार्थसुखबोधवृत्त्याख्यस्यास्य ग्रन्थस्य प्रणेताऽयमेव सुगृहीतनामा विबुधवरः। जैनसैद्धान्तिकबहुगहनविषया अपि सुगमा यथा स्युस्तथा सुलभसुललितपदसरण्या प्रतिपादिता इत्यनल्पप्रशंसार्होऽयं विद्वद्वरेण्यः। सतीष्वपि बह्वीषु तत्त्वार्थसूत्रव्याख्यासु नातिविस्तृततया नातिसङ्क्षेपतया सुगमसुन्दरतया चेयमतीव मनोहारिणीत्यस्मन्मतिः। तत्रान्यदपि कारणं विद्यते यत्सकलतार्किकविद्वन्मण्डलमण्डनायमानेन श्रीमदकलङ्कदेवेन विरचित-तत्त्वार्थराजवार्त्तिकालङ्कारस्य पङ्क्तयो बह्व्यस्तत्र तत्र सन्दर्भानुसारमुद्धृत्य संयोजिता अस्मिन् ग्रन्थे। जैनसिद्धान्तविषयबुभुत्सूनां विदुषामतीवोपकार-कोऽयं ग्रन्थ इति वक्तुमिच्छामः॥

उद्दामविद्वानयं स्वजन्मना किं तत्स्थानं पवित्रीचकार? कावस्य मातापितरौ? कान्यन्यान्यनेन ग्रन्थरत्नानि प्रणीतानि? इत्यादिविषयाणां कुत्राप्युल्लेखानुपलब्धेस्तानवबोद्धुं बोधितुं च न शक्नुम इति खिद्यतेऽस्म-न्मानसम्। एतेनास्य समयगमकं साधनमपि नोपलभ्यत इति सूचितं भवति। तथाप्यस्य ग्रन्थस्य तत्तदध्यायान्त्यास्थितगद्यान्तर्गत "महासैद्धान्तः श्री-

जिनचन्द्रभट्टारकस्तच्छिष्यपण्डितश्रीभास्करनन्दिविरचित " इति वाक्येन, एतद्ग्रन्थान्त्यगत—

तस्यासीत्सुविशुद्धदृष्टिविभवः सिद्धान्तपारङ्गतः ।
शिष्यः श्रीजिनचन्द्रनामकलितश्चारित्रभूषान्वितः ॥
शिष्यो भास्करनन्दिनामविबुधस्तस्याभवत्तत्त्ववित् ।
तेनाकारि सुखादिबोधविषया तत्त्वार्थवृत्तिः स्फुटं ॥

इत्यनेन श्लोकेन च संसूचितं किञ्चिदवलम्बनमाश्रित्य विचार्यते—

ग्रन्थकर्ता स्वस्मिन् जिनचन्द्रभट्टारकस्य शिष्यत्वं प्रख्यापयति किल । यद्यधुना जिनचन्द्राचार्यस्य समयोऽवगतो भवेत्तर्हि ततस्तस्य शिष्यस्य भास्करनन्दिनोऽपि समयोऽनुमीयेत । किं तु जिनचन्द्रनामान आचार्या अनेके भुवनतलमिदमलंचक्रुरिति विज्ञायते । कर्णाटककविचक्रवर्ती पोन्न-महाकविः (९५०) स्वरचितशान्तिपुराणे—

आ चन्दिनन्दिमुनिप स-
दाचारर शिष्यरमल जिनचन्द्रमुनी-
न्द्राचार्यर् त्रैलोक्य च-
राचररक्षाक्षमैककारणनिरतर् ॥ २५ ॥

इत्यादि श्लोकैरेकं जिनचन्द्राचार्यं स्तौति । स तु चन्दिनन्दिमुनिपस्यान्ते-वासी । अस्य भास्करनन्दिनो गुरुर्जिनचन्द्राचार्यस्तु सर्वसाधुमुनिपस्य शिष्य इति ख्यापितः । अतोऽनयोर्भिन्नत्वं प्रतीयते ॥

श्रवणबेळ्गुळास्थित (६९) शासनलेखे द्वितीयमाघनन्द्याचार्यानन्तर-मेको जिनचन्द्राचार्यः समाख्यातः । प्रायस्स एवायं जिनचन्द्राचार्य इति वितर्कयामः । स च माघनन्द्याचार्यः पञ्चाशदुत्तरद्विशताधिकसहस्रतमाब्द (१२५०) जीवित इत्युल्लिखितत्वादितिहाससंशोधकैः कैश्चिद्विपश्चिद्भिस्त-स्मादुत्तरकालभाविनो जिनचन्द्राचार्यस्य कालः उपपञ्चसप्तत्युत्तरद्विशताधिक-

सहस्रतमाब्द (१२७५) इत्यभ्यूह्यते। तस्य चान्तेवासी श्रीभास्करनन्दिविबुधः क्रिस्तीयत्रयोदशतमशतकस्यान्तिम कालिक इति सम्भावयामः। अयं तु विषयो विमर्शकविमर्शाधीन इति न प्रतन्यते ॥

## उपसंहारः

अयं च ग्रन्थोऽधोदर्शिततालपत्रमयपुस्तकत्रयसाहाय्येन संशोधितोऽस्ति। तत्रैतत्कोशागारीयपुस्तकमेकं, श्रवणबेळुगुळनिवासिभिः श्री एस्. ऐ. ब्रह्मसूरिशास्त्रिभिः प्रेषितमेकं, चामराजनगरनिवासिभिः श्रीज्ञानेश्वरपण्डितैः प्रेषितमेकम्। त्रीण्येतानि पुस्तकानि यथाक्रमं 'क' 'ख' 'ग' इति सङ्केतितानीति बोद्धव्यानि। तत्र 'क' पुस्तकं प्रायः शुद्धमपि बहुत्र तस्मिन् ग्रन्थपाता वर्तन्ते। द्वितीयतृतीयपुस्तकयोः साहाय्येनोपलब्धानि समुचितपदानि तत्र तत्र संयोज्य समीकृताः। इमे 'ख' 'ग' पुस्तके अपि प्रायः शुद्धतरे एव। एतेषु पुस्तकेषु राजवार्त्तिकादिषु च यत्र ये पाठभेदा दृष्टाः तत्र ते भेदाः केषां चित्कठिनपदानां प्रतिपदानि च टिप्पण्यामुपदर्शितानि ॥

अस्याः प्रस्तावनायाः समुल्लेखने येषां पुस्तक, प्रस्तावना, शासनलेखादीनां सहायता समुपलब्धा तेषां नामोल्लेखनानि तत्र तत्रैव कृतानीति नात्र पुनरुक्तेरावश्यकता। अस्मिन्नवसरे तत्तल्लेखकानामुपर्युक्तग्रन्थप्रेषकमहाशयानां चोपकारं स्मारं स्मारं विरमामः ॥

ए. शान्तिराजशास्त्री.

(न्यायतीर्थ, आस्थानमहाविद्वान्)

# शुद्धाशुद्धपत्रिका

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८ | १४ | विधं- | विधम्। |
| १५ | २८ | प्रतिषेधार्थ। | प्रतिषेधार्थ |
| २२ | २३ | दत्तूर। | दत्तूर |
| ,, | २४ | य | या |
| २४ | ४ | मर्यायो | पर्यायो |
| ४६ | १८ | तिस्त्रो | तिस्रो |
| ५८ | १२ | पर्वतयो | पर्वतयोः |
| ,, | २३ | स्तद्विभाः | स्तद्विभा |
| ५९ | २३ | षद्म | पद्म |
| ६० | ५ | योजनसस्त्रं | योजनसहस्त्रं |
| ६५ | २४ | हरिवर्षकाश्च | हारिवर्षकाश्च |
| ७१ | २३ | अन्तगतो | अन्तर्गतो |
| ७९ | १० | सिद्धे | सिद्धे |
| ,, | ११ | लेश्यावा | लेश्याव |
| ८३ | २३ | शन्तार | शतार |
| ८५ | ५ | उपरिष्टे | उपरिष्टे |
| ८९ | २४ | तैराधिकास्ते | कैराधिकास्ते |
| ९० | २२ | पति | पीत |
| ,, | ,, | शेषेशु | शेषेषु |
| ९६ | ७ | आदियोषां | आदियेषां |
| १०६ | १६ | मिस्त्रसानिमित्ता | विस्त्रसानिमित्ता |
| ११० | १२ | प्रदेश | प्रदेशो |
| ,, | १५ | शक्तवत् | शक्तिवत् |
| १११ | २२ | त्वसङ्ख्य | त्वसङ्ख्येय |
| ११३ | २० | तर्ह्यनेक | तर्ह्यनेक |
| ,, | २१ | प्रत्ययम्य | प्रत्ययस्य |
| ११५ | १३ | स्यत् | स्यात् |
| ११७ | २ | कथाश्चिचिन् | कथाश्चिन् |
| ११८ | १ | सुस्वा | सुखा |
| १२३ | २२ | द्विविधम | द्विविधम् |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२५ | १२ | रसादय | रसादयः |
| १४१ | १९ | द्यक्षयापि | द्यपेक्षयापि |
| १४६ | १२ | द्यस्य | चाद्यस्य |
| १४७ | ९ | स्वभाव | स्वभावः |
| १५६ | ४ | परोपरोधाकरणऽ | परोपरोधाऽकरण |
| १५७ | १ | कथाश्रयणम् | कथाश्रवणम् |
| १८० | २५ | प्रत्र | पत्र |
| १८१ | १८ | चार्यायां | चर्यायां |
| १८५ | १३ | दृष्टयसंयत | दृष्टयसंयत |
| १९० | १३ | अष्टविंशति | अष्टाविंशति |
| १९२ | २२ | प्रात्यख्यान | प्रत्याख्यान |
| १९३ | ७ | श्चितुर्भि | श्चतुर्भि |
| ,, | १९ | द्वा | द्वौ |
| ९५ | ५ | प्रत्यप्यक्तं | प्रत्यप्युक्तं |
| १९८ | १ | निमाण | निर्माण |
| २०० | २८ | तद् क्षया | तदपेक्षया |
| २११ | ९ | ताड | ताडन |
| २१४ | २ | मिइत्यत्रोच्यते | मित्यत्रोच्यते |
| २१६ | २३ | आवमौदार्य | आवमौदर्य |
| २१७ | ११ | सङ्कीर्तनानुम्मरण | सङ्कीर्तनानुस्मरण |
| ,, | १३ | वैयापृत्य | I वैयापृत्य |
| ,, | २६ | श्नोक | श्लोक |
| २१९ | २ | पक्राग्र | एकाग्र |
| ,, | २२ | तद्विपरीतं | विपरीतं |
| २२४ | २९ | पुलक्काद्यः | पुलाकाद्यः |
| २४० | १२ | बन्धा | बन्धः |
| ,, | १३ | गुणानः | गुणानां |
| २४८ | २ | अथ तत्त्वार्थसुखबोध-वृत्तेः सूत्राणामका-रादिकोशः. | अथ सूत्राणामका-रादिकोशः. |

---

॥ श्रीमत्पञ्चगुरुभ्यो नमः ॥

भास्करनन्दिविरचिता

सुखबोधा

# तत्त्वार्थवृत्तिः



जयन्ति कुमतध्वान्तपाटने पटुभास्कराः ।
विद्यानन्दाः सतां मान्याः पूज्यपादा जिनेश्वराः ॥

अथातिविस्तरमन्तरेण [1] विमतिप्रतिबोधनार्थमिष्टदेवतानमस्कारपुरस्सरं तत्त्वार्थसूत्रपदविवरणं क्रियते । तत्रादौ नमस्कारश्लोकः—

मोक्षमार्गस्य नेतारं भेत्तारं कर्मभूभृताम् ।
ज्ञातारं विश्वतत्त्वानां वन्दे तद्गुणलब्धये ॥

अस्य समुदायार्थः कथ्यते—मोक्षोपायस्योपदेष्टारं सकलजीवादितत्त्वानां ज्ञातारं कर्ममहापर्वतानां भेत्तारं भगवन्तमर्हन्तमेवानन्तज्ञानाद्येतद्गुणप्राप्त्यर्थं वन्देऽहं तस्यैव सकलप्रमाणाविरुद्धानेकान्तात्मकार्थभाषित्वादिति । किंस्वरूपोऽसौ मोक्षमार्ग इति केनचिदासन्नभव्येन परिपृष्टे सत्याचार्यः प्राह—

**सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १ ॥**

सम्यक्शब्दः प्रशस्तवाची । स च दर्शनादिभिस्त्रिभिर्विशेषणत्वेन प्रत्येकमभिसम्बध्यते — सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चारित्रमिति । यज्जीवादीनां याथात्म्यश्रद्धानं [2] ज्ञानस्य सम्यग्व्यपदेशहेतुस्तत्सम्यग्दर्श-

[1] विमतिप्रतिबोधनार्थाय—क.   [2] दर्शनस्य—क.

नम् । [1] तेषामेव याथात्म्यनिश्चयः सम्यग्ज्ञानम् । संसारकारणविनिवृत्तिं प्रत्युद्यतस्य सम्यग्ज्ञानिनो बाह्याभ्यन्तरक्रियोपरमः सम्यक्चारित्रम् । पश्यति दृश्यतेऽनेन दृष्टिर्वा दर्शनम् । जानाति ज्ञायतेऽनेन ज्ञातिर्वा ज्ञानम् । चरति चर्यते चरणमात्रं वा चारित्रम् । मोक्षणं मोक्षः । स च द्रव्यभावस्वभावसकलकर्मसंक्षये पुंसोऽनन्तज्ञानादिस्वरूपलाभः । मृष्टोऽसौ मार्गः । मृग्यत इति वा मार्गः । स च संसारकारणविनिवर्तनसमर्थो मोक्षप्राप्त्युपाय उच्यते । स च समुदितसम्यग्दर्शनादित्रितयात्मक एव । व्यस्तस्य सद्दर्शनादेर्मोक्षहेतुत्वानुपपत्तेः । रसायनविषयव्यस्तश्रद्धानादेः सर्वव्याधिविनिवृत्तिहेतुत्वाभाववत् । किंच संसारकारणं देहिनां मिथ्याभिनिवेशाऽज्ञानविपरीतचरणरूपमन्यतमापाये संसरणापकर्षविशेषाऽनिश्चयात् । तच्च त्रिविधं संसारकारणं दर्शनमात्रेण ज्ञानमात्रेण [2] चरणमात्रेणैकैकेन द्वाभ्यां वा न निवर्तते । तत्प्रतिपक्षभूतेन तत्त्वश्रद्धानादित्रयेणैव तस्य निवर्तयितुं शक्यत्वात् । न चाज्ञानमात्रहेतुकः संसारस्तत्त्वज्ञानोत्पत्तावज्ञाननिवृत्तावपि संसारेऽवस्थानसंभवात् । अन्यथाप्तस्य तत्त्वोपदेशाघटनात् । अज्ञानासंयम[3]हेतुनियतत्वमपि न संसारस्य घटते । स्वयमाविर्भूततत्त्वज्ञानवैराग्यस्याज्ञानासंयमाभावेऽपि संसारावस्थानाभ्युपगमादन्यथा तत्त्वोपदेशाभावलक्षणस्योक्तदोषानुषङ्गस्य तदवस्थत्वात् । ततो मिथ्यादर्शनादित्रितय हेतुक एव संसार इति भावनीयम् । तस्यात्यन्तनिवृत्तिलक्षणश्च मोक्षः सम्यग्दर्शनादित्रितयसाध्य एवेति च [4]निश्चयः । तर्हि सयोगकेवलिनः प्रकृष्टसम्यग्दर्शनादित्रितयाविर्भावे सति मिथ्यादर्शनादित्रितयनिवृत्तिलक्षण एव मुक्तिप्रसङ्गात्कथं भवतां जैनानामपि मते आप्तस्य तत्त्वोपदेशना सम्भाव्यत इति चेन्न—कायादि[5]योगत्रयसम्भवात् । योगा ह्यचारित्रेऽन्तर्भवन्ति तेषां त्रयोदशगुणस्थानव्यापित्वात् । कायादिक्रियानिवृत्तिकारणस्यायोगकेवलिसमुच्छिन्नक्रियानिवृत्तिपरमशुक्लध्यानस्य चारित्रेऽन्तर्भाववत् । अत एव अयोगकेवलिचरमसमयवर्तिरत्नत्रयसंपूर्णतैव सकलसंसारोच्छेदनिबन्धनमित्यत्र बोद्धव्यम् । अत्र पुनर्विशेषेण मिथ्यात्वोदयजनितदुरागमवासनावासितान्तःकरणाः परवादिनो मुक्तेरुपायं मुक्तिस्वरूपं चान्यथा प्रतिपादयन्ति प्रमुग्ध[6]लुब्धलोकानाम् । तथा हि—सकलनिष्कलाप्तप्राप्तमन्त्र-

---

[1] जीवादीनामेवेत्यर्थः. [2] आचरणमात्रेण—क. ग. [3] निमित्तत्वमपि—ख. निहितत्वमपि—ग. [4] निश्चेयः—ख. [5] योगसम्भवात्—क, ग. [6] मुग्ध—क.

तन्त्रापेक्षदीक्षालक्षणात् [1]श्रद्धामात्रानुसरणान्मोक्ष इति सैद्धान्तवैशेषिकाः। द्रव्यगुणकर्मसामान्यसमवायान्त्यविशेषाभावाभिधानानां [2]साधर्म्यवैधर्म्याववबोधतन्त्रात् ज्ञानमात्रान्मोक्ष इति तार्किकवैशेषिकाः। त्रिकालभस्मोद्धूलनेढ्यालड्डुकप्रदानप्रदक्षिणीकरणात्मविडम्बनादिक्रियाकाण्डमात्रानुष्ठानादेव मोक्ष इति पाशुपताः। सर्वेषु पेयापेयभक्ष्याभक्ष्यादिषु [3] निश्चलचित्तत्वान्मोक्ष इति [4]कालाचार्यकाः। तथा च त्रिविक्रमतोक्तिः—मदिरामोदमेदुरवदनसरसप्रसन्नहृदयः सव्यपार्श्वसमीपविनिवेशितशक्तिः शक्तिमुद्रासनधरः स्वयमुमामहेश्वरायमाणो नित्यामन्त्रेण पार्वतीश्वरमाराधयेदिति मोक्षः। प्रकृतिपुरुषयोर्विवेकख्यातेर्मोक्ष इति साङ्ख्याः। नैरात्म्यादिनिवेदितसम्भावनातो मोक्ष इति दशबलशिष्याः। अङ्गाराञ्जनादिवत् स्वभावादेव कालुष्योत्कर्षप्रवृत्तस्य चित्तस्य न कुतश्चिद्विशुद्धिरिति जैमिनीयाः। सति धर्मिणि धर्माश्चिन्त्यन्ते ततः परलोकिनोऽभावात्परलोकाभावे कस्यासौ मोक्ष इति समवाप्तसमस्तनास्तिकाधिपत्या बार्हस्पत्याः। परमब्रह्मदर्शनवशादशेषभेदसंवेदनाऽविद्याविनाशान्मोक्ष इति वेदान्तवादिनः॥

नैवान्तस्तत्त्वमस्तीह न बहिस्तत्त्वमञ्जसा।
विचारगोचरातीतेः शून्यता श्रेयसी ततः॥

इति पश्यतोहराः प्रकाशितशून्यतैकान्ततिमिराः शाक्यविशेषाः। तथा—ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्काराणां नवात्मगुणानामत्यन्तोच्छित्तिर्मुक्तिरिति काणादाः। तदुक्तम्—

बहिः शरीराद्यद्रूपमात्मनः सम्प्रतीयते।
उक्तं तदेव मुक्तस्य मुनिना कणभोजिना॥ इति॥

निरास्रवचित्तोत्पत्तिर्मोक्ष इति ताथागताः। तदुक्तम्—

दिशं न काञ्चिद्विदिशं न काञ्चि-
न्नैवावनिं गच्छति नान्तरिक्षम्।
दीपो यथा निर्वृतिमभ्युपेतः
स्नेहक्षयात्केवलमेति शान्तिम्॥

---

1 श्रद्धामात्रानुस्मरणात्—क. ग. 2 पदार्थानां साधर्म्य—ख. 3 निःशङ्कचित्तवृत्ताद्वृत्तात्—ख. 4 कुलाचार्यकाः—ख.

दिशं न काञ्चिद्विदिशं न काञ्चि-
नैवावनिं गच्छति नान्तरिक्षम्।
जीवस्तथा निर्वृतिमभ्युपेतः
क्लेशक्षयात्केवलमेति शान्तिम्॥ इति॥

बुद्धिमनोऽहङ्कारविरहादखिलेन्द्रियोपशमावहात्तदा द्रष्टुः स्वरूपेऽवस्थानं मुक्तिरिति कापिलाः। यथा घटविघटने घटाकाशमाकाशीभवेत्तथा देहोच्छेदात्सर्वः प्राणी परे ब्रह्मणि लीयत इति ब्रह्माद्वैतवादिनः। एवमज्ञातपरमार्थानां मिथ्यादृशामेतेऽन्येऽपि दुर्णया बहवः सन्ति। ते च युक्त्या विचार्यमाणा यथार्थतया न व्यवतिष्ठन्ते। तथा हि—

न तावत्केवलं श्रद्धामात्रं श्रेयोर्थिनां श्रेयः संश्रयाय भवति। यथा न बुभुक्षितवशादुदुम्बराणां पाको जायते। नापि पात्रावेशादिवन्मन्त्रतन्त्राभ्यासादात्मदोषप्रक्षयो भवति, संयमानुष्ठानक्लेशवैयर्थ्यप्रसङ्गात्। तथा न दीक्षामात्रमेव मुक्तेः कारणं भवितुमर्हति, संसारसमुद्भूतपूर्वदोषाणां पुंसो दीक्षाक्षणान्तरे पश्चादप्युपलम्भसम्भवात्। नाप्यर्थपरिज्ञानमात्रं क्रियाश्रद्धानरहितं विवक्षितकार्यकारि स्याल्लोकेऽपि हि न पयःपरिज्ञानमेव तर्षापकर्षकारि दृष्टमिष्टं वा शिष्टैरिति। तथा चोक्तम्—

ज्ञानहीने क्रिया पुंसि परं नारभते फलम्।
तरोश्छायेव किं लभ्या फलश्रीर्नष्टदृष्टिभिः॥
ज्ञानं पङ्गौ क्रिया चान्धे निःश्रद्धे नार्थकृद्द्वयम्।
ततो ज्ञानक्रियाश्रद्धात्रयं तत्पदकारणम्॥

अन्यच्चोक्तम्—

हतं ज्ञानं क्रियाशून्यं हता चाज्ञानिनः क्रिया।
धावन्नप्यन्धको नष्टः पश्यन्नपि च पङ्गुकः॥ इति॥

तथा यदि निःशङ्कात्मप्रवृत्तिर्मोक्षहेतुरिष्यते तदा कौलानामिव तत्सम्भवात् वकादीनामपि मोक्षप्रसङ्गः स्यात्। तथा प्रकृतिपुरुषयोर्व्यक्तेतरयोर्नित्यव्यापिस्वभावयोः कथं वियोगः समुपलभ्येत? येन तद्वियोगदर्शनं मोक्षहेतुत्वेन साङ्ख्यानां घटेत। तथा चेतसि नैरात्म्यादिप्रतिभा-

संभावनामात्रादेव मोक्षाभ्युपगमे सौगतेभ्योऽतितरां विप्रयुक्तकामिनां [1]मोक्षप्रसङ्गः स्यात् स्फुटतरभावनासम्भवात्। तदुक्तम्—

पिहिते कारागारे तमसि च सूचीमुखाग्रनिर्भेद्ये।
मयि च निमीलितनयने तथापि कान्ताननं व्यक्तम् ॥इति ॥

तथा स्वभावान्तरपरिणामात्मकत्वान्मणिमुक्ताफलादिवदात्मनो मलक्षयोपि [2]स्वहेतुरभ्युपकर्तुं शक्यत एव। तथा पृथिव्यादि[3]तत्सहेतुकत्वात्तदहर्जातबालकस्तनेहातो रक्षाव्यापारदर्शनाद्भवान्तरस्मृतेश्च पृथिव्यादिभूतेभ्योऽर्थान्तरभूतो जीवः प्रकृतिज्ञः कथंचिन्नित्यः सर्वथास्तीत्यभ्युपगन्तव्यम्। तथा प्रत्यक्षादिप्रमाणोपपन्नत्वेन स्वयं प्रतीयमानजन्ममृत्युसुखदुःखादिविवर्तैर्जगतो वैचित्र्यदर्शनात्कथमशेषभेदसंवेदनमविद्यारूपं स्यात्? येन वेदान्तवादिनां ब्रह्माद्वैतदर्शनं जगतो भेददर्शनलक्षणाविद्याविनाशहेतुत्वेन मुक्तिहेतुर्भवेत्। तथा सौगतानां सर्वथा सर्वशून्यतावादोऽपि न घटते-शून्यं तत्त्वमहं वादी प्रमाणबलेन साधयामीति वचनविरोधप्रसङ्गात्। ततः सिद्धमेतत्—प्रमाणोपपन्नस्यात्मनः सम्यग्दर्शनज्ञानचारित्रात्मको मोक्षमार्गो मोक्षमार्गत्वान्यथानुपपत्तेस्तथाविधपाटलीपुत्रादिमार्गवदिति। तथा स्वहेतुतो मुक्तस्यात्मनः सांसारिकविनश्वरज्ञानसुखाभावेऽपि सकलकर्मक्षयोद्भूतनित्यातिशयज्ञानसुखात्मकत्वमेषितव्यमेव वैशेषिकैः। अन्यथेच्छाद्वेषाद्यभाववत्तदभावे लक्षणशून्यस्य मुक्तात्मनोप्यभावप्रसङ्गः स्यादुष्णत्वस्यासाधारणलक्षणस्याभावेऽग्नेरभाववत्। किंच सदाशिवेश्वरादयः संसारिणो मुक्ता वा? यदि संसारिणस्तदा कथं तेषामाप्तता स्यात्? अथ मुक्तास्तेऽभ्युपगम्यन्ते तर्हि क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरस्तत्र निरतिशयं सर्वज्ञबीजमिति यत्पतञ्जलिजल्पितमन्यच्च—

ऐश्वर्यमप्रतिहतं सहजो विरागः
सृष्टिर्निसर्गजनिता वशितेन्द्रियेषु।
आत्यन्तिकं सुखमनावरणा च शक्ति-
र्ज्ञानं तु सर्वविषयं भगवंस्तवैव ॥

---

1 मोक्षः प्रसङ्गः—ख ग.   2 स्वहेतुभ्यः कर्तुं—ख.   3 वत्—ख.

इत्येतत्सर्वमनुपपन्नमेव स्यान्मुक्तेषु ज्ञानाद्यसम्भवेषु सर्वज्ञत्वादिवचनविरोधात्। तथानेकजन्मसङ्क्रान्तेर्यावदद्याक्षयत्वं पुंसो यदि सिद्धं तदा मुक्त्यवस्थायां कुतो हेतोस्तस्य हानिः सौगतैः प्रतिपाद्येत ? तथा सकलमलापाये द्रष्टुः स्वरूपावस्थानं यदि कापिलैः सर्वथा बुद्धिरहितं प्रतिपाद्येत तदा तस्य कुम्भादिवदचेतनत्वमेवापनिपद्येत। अथ यत्रैवात्मनि चक्षुरादीन्द्रियसद्भावस्तत्रैव बुद्धिर्भवेन्न पुनर्मुक्तात्मनि तदभावादिति मतं तदप्ययुक्तमन्धस्यापि सत्यस्वप्नदर्शनसम्भवात्। तथा यद्येकं ब्रह्म निस्तरङ्गं कुतश्चित्प्रमाणाद्वेदान्तवादिनां मते सिध्येत्तदाकाशे घटाकाशवत्तत्रेदं सर्वं जगल्लीयते। न चादोऽस्ति। अथ मतमेतत्—

एक एव हि भात्यत्मा [1]देहिदेहे व्यवस्थितः।
[2]एकधा बहुधा [3]वापि दृश्यते जलचन्द्रवत्॥ इति॥

तदप्यनुचितं—यथाकाशे एकरूपश्चन्द्रो जलादिषु चानेकरूपश्च जलैरुपलभ्यते, तथा सकलभेदेभ्योऽन्यत्र नैकस्वभावं ब्रह्म संवेद्यते किं तर्ह्यनेकस्वभावमेव देहादिभेदेषु प्रवर्तमानं संवेद्यत इति न ब्रह्मैकं नामेत्यलमतिविस्तरेण। जिनमतोक्तस्यैव मोक्षस्वरूपस्य प्रमाणोपपन्नत्वसम्भवात्। तदुक्तम्—

आनन्दो ज्ञानमैश्वर्यं वीर्यं परमसूक्ष्मता।
एतदात्यन्तिकं यत्र स मोक्षो जिनशासने॥ इति॥

तत्र सम्यग्दर्शनलक्षणप्रतिपादनार्थमाह—

## तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥ २ ॥

तेषां भावः स्वरूपभवनं तत्त्वं—जीवादिवस्तुयाथात्म्यमित्यर्थः। तत्त्वेनार्यन्ते ज्ञायन्त इति तत्त्वार्था जीवादयो वक्ष्यमाणलक्षणास्तेषां श्रद्धानम्। दर्शनमोहोपशमक्षयक्षयोपशमापेक्षं विपरीताभिमानरहितमात्मस्वरूपं सम्यग्दर्शनं प्रत्येतव्यम्। इदं लक्षणमतिव्याप्त्यव्याप्त्यसंभवदोषरहितत्वादनवद्यम्। रुचिः सम्यक्त्वमिति केचिदाहुः। रुचिश्चेच्छाभिलाष इत्यनर्थान्तरम्। सा च चारित्रमोहप्रकारस्य लोभकषायस्य भेदस्तस्मिंश्च सम्यक्त्वलक्षणेङ्गीक्रियमाणेऽतिव्याप्त्यव्याप्तिलक्षणदोषद्वयप्रसङ्गः स्यात्। तथा हि—

---

[1] देहेदेहे—ख. [2] एकदा—ख. [3] चापि—ख.

यदा स्वस्य बहुश्रुतत्वविख्यापयिषया [1]निराचिकीर्षया परमतस्वरूपजिज्ञासया भगवदर्हत्सर्वज्ञभाषितागमविषयानपि जीवादिपदार्थानवबोद्धुमिच्छन्ति मिथ्यादृष्टयस्तदा तेषामपि सम्यग्दृष्टित्वं प्राप्नोतीत्यतिव्याप्तिर्नाम लक्षणस्य दोषः स्यात्। तथा निरवशेषमोहस्य संक्षयादर्हतः सम्यग्दर्शनाभावो भवेदित्यव्याप्तिर्नाम लक्षणस्य दोषः समापनिपद्यते। तस्मादेतल्लक्षणं सम्यक्त्वस्य परित्यज्यते इति। तच्च सम्यग्दर्शनं सरागवीतरागविकल्पाद्द्विविधम्। प्रशमसंवेगानुकम्पास्तिक्याभिव्यक्तिलक्षणं सरागसम्यक्त्वम्। आत्मविशुद्धिमात्रं वीतरागसम्यक्त्वमिति। रागादीनामनुद्रेकः प्रशमः। संसारभीरुता संवेगः। जीवेषु दयालुताऽनुकम्पा। सर्वज्ञवीतरागप्रणीतपरमागमे यथैव जीवादिरर्थः प्रतिपादितस्तथैव सोऽस्तीति मतिर्यस्यास्ति स आस्तिकस्तस्य भावः कर्म वास्तिक्यम्। सत्येवास्तिक्ये प्रशमादीनां व्यस्तसमस्तानां सम्यक्त्वाभिव्यञ्जकत्वम्। तदभावे मिथ्यादृष्टिष्वपि प्रशमादित्रितयस्य सम्भवात्। आस्तिक्यं पुनः केवलमपि सम्यग्दर्शनस्याभिव्यक्तिहेतुरित्यलं प्रसङ्गेन। सम्यग्दर्शनोत्पत्तिहेतुद्वयसंसूचनार्थमिदमुच्यते—

तन्निसर्गादधिगमाद्वा ॥ ३ ॥

यद्यपि प्रकृतत्वान्मोक्षमार्गोऽत्र प्रधानस्तथापि तच्छब्दोपादानसामर्थ्येन सम्यग्दर्शनस्य परामर्शः। निसर्गः स्वभावः। जीवाद्यर्थस्वरूपावधारणमधिगमः। तत्सम्यग्दर्शनं निसर्गादधिगमाद्वा समुत्पद्यत इति समुदायार्थः। सर्वथाप्यनवबुद्धजीवाद्यर्थस्वरूपस्य पुंसः श्रद्धानाभावाद्यद्यपि निसर्गजेप्यर्थाधिगमः कियानस्ति तथा यथासम्भवं दर्शनमोहस्योपशमः क्षयः क्षयोपशमो वान्तरङ्गो हेतुरप्युभयसम्यक्त्वसाधारणत्वादस्ति, तथापि परोपदेशमन्तरेण यज्जायते तन्निसर्गजमित्याख्यायते। यत्पुनः परोपदेशपूर्वकजीवाद्यर्थनिश्चयादाविर्भवति तदधिगमजमित्यनयोरयं भेदः। दर्शनस्य विषयत्वेनोपक्षिप्तजीवादितत्त्वप्रतिपादनायाह—

जीवाऽजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ॥ ४ ॥

तत्र चेतनालक्षणो जीवः। चेतना च ज्ञानाद्यात्मिका। अजीवः पुनस्तद्विपरीतलक्षणः। कर्मागमनद्वारमास्रवः। स च मिथ्यादर्शनाद्यात्मको

---

[1] निराचिकीर्षतः—क. ग.

द्रव्यभावरूपः । पुद्गलपर्यायो द्रव्यरूपश्चेतनपर्यायो भावरूपः । जीवस्य चेतनाऽचेतनकर्मसम्बन्धो बन्धः । सोऽपि पूर्ववद्द्रव्यभावभेदाद्द्विविधः । मिथ्यादर्शनादिचेतनकर्मणा सह जीवस्य तादात्म्यलक्षणसम्बन्धो भावबन्धः । पौद्गलिकाऽचेतनकर्मणा सह संयोगरूपः सम्बन्धो जीवस्य द्रव्यबन्धः । अपूर्वकर्मागमनिरोधो गुप्तिसमित्यादिहेतुकः संवरः । सोपि द्रव्यभावविषयत्वाद्द्वेधा । देशतः सञ्चितकर्माभावो निर्जरा । सापि पूर्ववद्द्रव्यभावरूपा [1]सोपाया निरुपाया च सम्भवति । ध्यानादितपोभिः कर्मविपाकहेतुका सोपाया । स्वकालेनैव कर्माभावविषया निरुपाया निर्जरा । संवरो निर्जराहेतुकः । सकलद्रव्यभावकर्माभावो मोक्षो जीवस्येति सम्बन्धः । कथंचित्तदव्यतिरेकात् सामानाधिकरण्येन जीवादय एव तत्त्वमिति व्यपदिश्यन्ते । तेषामेव सम्यग्दर्शनादिजीवादीनां संव्यवहारविप्रतिपत्तिनिराकरणार्थं नामादिनिक्षेपविधिमाह—

## नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ ५ ॥

जातिद्रव्यगुणक्रिया अनपेक्ष्य संज्ञाकरणं नाम । तदनेकविधं—काष्ठलेप्यचित्रकर्माक्षनिक्षेपादिषु सोऽयमित्येकत्वाभिसन्धानेन कृतनामकस्य वस्तुनः प्रतिकृतिः स्थाप्यमाना स्थापना । सा सद्भावासद्भावभेदाद्द्वेधा । आकारवती सद्भावस्थापना । अनाकाराऽसद्भावस्थापना । भविष्यत्पर्यायाभिमुखमतीततत्पर्यायं च वस्तु द्रव्यम् । तद्द्विविधमागमद्रव्यं नो आगमद्रव्यं चेति । तत्र जीवप्राभृतज्ञोऽनुपयुक्तश्रुतविकल्पाधिरूढः पुरुष [2] आगमजीवद्रव्यम् । नो आगमद्रव्यं तु त्रिविधं—जीवप्राभृतज्ञशरीरं नो आगमद्रव्यं भावि नो आगमद्रव्यं, [3]तद्व्यतिरिक्तं नो आगमद्रव्यं चेति । प्रथमं त्रिकालवृत्तिभेदात्त्रिविधम् । शरीरस्य नो आगमद्रव्यत्वं चानुपयुक्तागमजीवद्रव्यसम्बन्धात्तद्बहिर्भूतत्वाच्च बोद्धव्यम् । अनागतस्वपरिणामयोग्यं वस्तु भावि नो आगमद्रव्यम् । तत एव तन्मुख्यमितरत्सर्वमुपचरितमिति प्रतिपत्तव्यम् । तद्व्यतिरिक्तं नो आगमद्रव्यं द्वेधा—कर्म नोकर्मभेदात् । कर्म नो आगमद्रव्यमनेकविधं—ज्ञानावरणादिकर्मविकल्पात् । तद्भिन्नो कर्म नो आगमद्रव्यम् । शरीरोपचयापचयनिमित्तपुद्गलद्रव्यस्यानेकरूपत्वात् । तस्यापि नो आगम-

---

1 सोपायान्निरुपायात्सम्भवति—क. ग.  2 आगमद्रव्यजीवः—क.  3 तद्व्यतिरेकि—ख.

द्रव्यसम्बन्धादेव ज्ञायकशरीरवत्। तद्व्यतिरिक्तत्वं च कर्म नोकर्मणोरौदारिकादिज्ञायकशरीरत्वाभावात् भावि नो आगमद्रव्यत्वाभावाच्च निश्चीयते। वर्तमानतत्परिणामात्मकं द्रव्यमेव भावः। सोप्यागम नो आगमविकल्पात् द्विप्रकारः। तत्र जीवप्राभृतज्ञस्तदुपयुक्तश्रुतविकल्पाधिरूढो विवक्षितः पुरुष आगमभावस्तद्बहिर्भूतो वर्तमानपर्यायाविष्टो नो आगमभावस्ततोऽन्यत्वात्। तच्छब्देन सम्यग्दर्शनादिजीवादयः परामृश्यन्ते। न्यासो निक्षेपः प्ररूपणेत्येकोऽर्थः। तेषां सम्यग्दर्शनादिजीवादीनां न्यासो लोकसमयाविरोधेन यथोदाहरणं योजनीयः। ते च ज्ञानादिजीवादयः श्रद्धानविषया नामादिभिर्निक्षिप्ताः सम्यगधिकारा[1]त्परमार्थसन्तः सुनिश्चितासम्भवद्बाधकप्रमाणत्वात् संवेदनमात्रवदित्यलं प्रसङ्गेन। अधिगमजसद्दर्शनोत्पत्तिहेतुतत्त्वार्थाधिगमोपायप्रदर्शनार्थमाह—

## प्रमाणनयैरधिगमः ॥ ६ ॥

सामान्यविशेषात्मकवस्तुपरिच्छेदकं प्रमाणम्। तद्द्वेधा—प्रत्यक्षपरोक्षभेदात्। तत्र च श्रुताख्यं प्रमाणमधिगमजसम्यग्दर्शनोत्पत्तेर्मुख्यो हेतुः। श्रुताख्यप्रमाणग्राह्यवस्त्वेकदेशद्रव्यपर्यायविषया नयाः। प्रमाणे च नयाश्च प्रमाणनया वक्ष्यमाणलक्षणास्तैस्तत्त्वार्थानामधिगमो निश्चयः क्रियते। मध्यमरुचिविनेयाभिप्रायवशात्तत्त्वार्थाधिगमोपायान्तरसूचनार्थमुच्यते—

## निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ॥ ७ ॥

किंलक्षणं सम्यग्दर्शनम्। किंलक्षणो जीव इति वा प्रश्ने "तत्त्वार्थश्रद्धानं सम्यग्दर्शनं" "चेतनालक्षणो जीव" इति वा वस्तुस्वरूपकथनं निर्देशः। कस्य सम्यग्दर्शनं जीवो वेत्यनुयोगे जीवस्य सम्यग्दर्शनं स्वात्मनो जीव इति वाधिपतित्वकथनं स्वामित्वम्। केन साध्यते सम्यग्दर्शनंजीवो वेति प्रश्ने अन्तरङ्गबहिरङ्गतत्साधकतमत्वख्यापनं साधनं। क्व सम्यग्दर्शनं क्व जीव इति वा प्रश्ने जीवे सम्यग्दर्शनम्। निश्चयात्स्वात्मनि जीवो व्यवहाराल्लोके शरीरे वा तिष्ठतीत्याधारप्रकाशनमधिकरणम्। सम्यग्दर्शनस्य जीवस्य वा कियान् काल इति प्रश्नेऽन्तर्मुहूर्तादिसाद्यपर्यवसाना-

---

1 परमार्थास्सन्तः।

नन्तकालकृतावस्थानिरूपणमनादिनिधनादिकालस्वरूपकथनं वा स्थितिः। कतिविधं सम्यग्दर्शनं कतिप्रकारो जीव इति वा प्रश्ने एकद्वित्र्यादिसङ्ख्येयासङ्ख्येयानन्तभेदकथनं विधानम्। प्रवृत्तिः फलं चेत्यपरमप्यनुयोगद्वयं कैश्चिदत्रोक्तम् । तत्र प्रवृत्तिरुत्पादव्ययध्रौव्यवृत्तिरुच्यते । फलन्त्वाजवञ्जवीभावः-संसार इत्यर्थः । एवं ज्ञानचारित्रजीवादिष्वप्युदाहार्यन्त इमे निर्देशादयः। सकलनिर्दिश्यमानादिवस्तुविषयाः श्रुतज्ञानविशेषाः प्रमाणात्मकाः । तदेकदेशविषया नयविशेषात्मकाः । तैश्च निर्देशादिभिस्तत्त्वार्थाधिगमो भवति । विस्तररुचिप्रतिपाद्याशयापेक्षयाऽधिगमोपायमुपलक्षयति—

## सत्सङ्ख्याक्षेत्रस्पर्शनकालान्तरभावाल्पबहुत्वैश्च ॥ ८ ॥

यत्सकलपदार्थाधिगममूलं जीवादिद्रव्यं मिथ्यादर्शनादिगुणास्तित्वसामान्यविशेषविषयं श्रुतज्ञाननिमित्तं सदित्यभिधानं तत्सकलादेशत्वादनुमन्यते। अथवा सङ्ग्रहव्यवहारनिमित्तविकलादेशत्वात्सदित्याख्यायते । भेदगणना सङ्ख्या। वर्तमाननिवाससामान्यं क्षेत्रम् । तदेव त्रिकालविषयं स्पर्शनम्। वर्तनादिलक्षणः कालः। स च परमार्थव्यवहारविकल्पाद्द्वेधा। कस्यचित्सम्यग्दर्शनादेर्गुणस्य सन्तानेन वर्तमानस्य कुतश्चित्कारणान्मध्ये विरहकालोऽन्तरम् । औपशमिकादिर्भावः । सङ्ख्याताद्यन्यतमनिश्चयोप्यर्थानां परस्परविशेषप्रतिपत्तिनिमित्तमल्पबहुत्वम्। एतैश्च सम्यग्दर्शनादिजीवादीनामधिगमो भवतीति वेदितव्यम्। ननु च सत्येवास्तित्वेऽर्थानां निर्देशो घटत इति निर्देशादेव सद्ग्रहणं सिद्धम्। विधानग्रहणात्सङ्ख्या लब्धा। अधिकरणग्रहणात् क्षेत्रस्पर्शनयोर्ग्रहणम्। स्थितिग्रहणात्कालस्यावगमः। भावस्तु नामादिनिक्षेपे उपात्त एव। अन्तराल्पबहुत्वयोरपि पूर्वसूत्र एवोपादानं कर्तव्यम् । तस्मात्पृथक्सूत्रेण सदादीनां पुनरुपादानमनर्थकं स्यादिति । सत्यं विस्तररुचिप्रतिपाद्याशयाऽपेक्षयेत्युक्तमेव प्राक् । प्रतिपाद्या हि केचित्सङ्क्षेपेण केचिद्विस्तरेणाऽपरे नातिसङ्क्षेपेण नातिविस्तरेण किंतु मध्यमप्रतिपत्त्या प्रतिपाद्या भवन्ति । तस्मात्सङ्क्षेपरुचिमध्यमरुचिविस्तररुचिशिष्यप्रतिपादनार्थं क्रमेण सूत्रत्रयं कृतमिति बोद्धव्यम् । अन्यथा हि यदि तीक्ष्णमतयः सङ्क्षेपरुचय एव प्रतिपाद्याः स्युस्तदा प्रमाणनयैरधिगम इत्यनेनैव तत्प्रतिपत्तिसिद्धौ किमन्यसूत्रारम्भेणेति । ते च सदादयः सकलादेशित्वाच्छ्रुता-

ख्यप्रमाणात्मकाः, विकलादेशित्वान्नयात्मकाश्च भवन्ति । तेषां च जीवस्थानगुणस्थानमार्गणास्थानवेदिभिरागमानुसारेण योजना कर्तव्या । तदेवं सम्यग्दर्शनं व्याख्यातम् । तदनन्तरमिदानीं सम्यग्ज्ञानं विचारार्हमिति तत्प्रतिपादनार्थमाह—

मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम् ॥ ९ ॥

[1]मतिज्ञानावरणक्षयोपशमे सति पञ्चभिरिन्द्रियैर्मनसा च यथास्वमर्थान्मन्यते मनुते वा पुरुषो यया सा मतिः । मननमात्रं वा मतिः । निरूप्यमाणं यदेव श्रूयते ज्ञायते येन तदेव श्रुतम् । शृणोति जानातीति वा श्रुतम् । श्रवणमात्रं वा श्रुतम् । अवाग्धीयते पुद्गलद्रव्यस्य तद्विषयस्याधःप्राचुर्यादधः प्रयुज्यते अवच्छिन्नविषयो वा ज्ञानविशेषोऽवधिः । परकीयमनोगतोर्थोऽपि मन उच्यते तत्साहचर्यात् । तस्य पर्ययणं परिगमनं समन्ताद्बोधनं मनःपर्ययः । तत्र ज्ञानसाधनत्वं प्रति मनसो न प्राधान्यम् । तत्र तस्यापेक्षामात्रत्वाद्यथाऽभ्रे चन्द्रमसं पश्येत्यत्राभ्रस्यापेक्षामात्रत्वम् । यन्निमित्तमार्थिनः केवन्ते सेवन्ते बाह्यमाभ्यन्तरं च तपः कुर्वन्ति तत्केवलम् । अथवा यदसहायं सकलावरणक्षयोद्भूतं ज्ञानं तत्केवलमित्याख्यायते । तानि मत्यादीनि पञ्च प्रत्येकं सम्यगधिकारात्सम्यग्ज्ञानव्यपदेशानि भवन्ति । ज्ञानस्यैव प्रामाण्यख्यापनार्थं प्रमाणस्वरूपसङ्ख्याविप्रतिपत्तिनिराकरणार्थं चाह—

तत्प्रमाणे ॥ १० ॥

तदित्यनेन सम्यग्ज्ञानस्य परामर्शः । प्रमिणोति प्रमीयतेऽनेन प्रमितिमात्रं वा प्रमाणम् । स्वातन्त्र्यविवक्षया कर्तृसाधनत्वम् । पारतन्त्र्यविवक्षया करणादिसाधनत्वं यथात्र तथान्यत्रापि यथासम्भवं योजनीयम् । यदेव मत्यादिचेतनं स्वार्थव्यवसायात्मकं सम्यग्ज्ञानं तदेव प्रमाणं भवति । तद्विपरीतस्य सन्निकर्षादेः प्रमाणत्वायोगाद्घटादिवत् । द्रव्येन्द्रियप्रदीपालोकादीनामप्युपचारात्प्रामाण्याभ्युपगमात् । द्विवचननिर्देशाद्द्वे एव प्रमाणे—परोक्षं प्रत्यक्षं चेति, शेषानुमानोपमादीनामत्रैवान्तर्भावात् । तत्र परोक्षप्रतिपादनार्थमाह—

---

1 तदावरण—ख. ग.

सङ्ख्यानुयोगे—सर्वस्तोका अष्टोत्तरशतसिद्धाः। सप्तोत्तरसिद्धादय आपञ्चाशत्सिद्धेभ्योऽनन्तगुणाः। एकान्नपञ्चाशत्सिद्धादय आपञ्चविंशतिसिद्धेभ्योऽसङ्ख्येयगुणाः। चतुर्विंशतिसिद्धादय आएकसिद्धेभ्यः सङ्ख्येयगुणाः। तदेवं व्याख्यातजीवादितत्त्वार्थविषयं श्रद्धानं ज्ञानं तत्पूर्वकं चारित्रमिति स्थितम्। एतत्सम्यग्दर्शनादीनि मोक्षमार्गो नान्यः। तत्प्रणेता सर्वज्ञो वीतरागश्च वन्द्य इति॥

इति यः सुखबोधाख्यां वृत्तिं तत्त्वार्थसङ्गिनीम्।
षट्सहस्रां सहस्रोनां विन्द्यात्स मोक्षमार्गवित्॥
यदत्र स्खलितं किञ्चिच्छाद्मस्थ्यादर्थशब्दयोः।
तद्विचार्यैव धीमन्तः शोधयन्तु विमत्सराः॥
नो निष्ठीवेन्न शेते वदति च न परं ह्येहि याहीति यातु
नो कण्डूयेत गात्रं व्रजति न निशि नोद्धट्टयेद्वा न दत्ते॥
नावष्टभ्नाति किञ्चिद्गुणनिधिरिति यो बद्धपर्यङ्कयोगः
कृत्वा सन्न्यासमन्ते शुभगतिरभवत्सर्वसाधुः स पूज्यः॥
तस्यासीत्सुविशुद्धदृष्टिविभवः सिद्धान्तपारं गतः
शिष्यः श्रीजिनचन्द्रनामकलितश्चारित्रभूषान्वितः।
शिष्यो भास्करनन्दिनामविबुधस्तस्याभवत्तत्त्ववित्
तेनाकारि सुखादिबोधविषया तत्त्वार्थवृत्तिः स्फुटम्॥

शशधरकरनिकरसतारनिस्तलतरलतलमुक्ताफलहारस्फारतारानिकुरुम्बबिम्बनिर्मलतरपरमोदारशरीरशुद्धध्यानानलोज्ज्वलज्वालाज्वलितघनघातीन्धनसञ्जातसकलविमलकेवलालोकितसकललोकालोकस्वभावश्रीमत्परमेश्वरजिनपतिमतविततमतिचिदचित्स्वभावाभिधानसाधितस्वभावपरमाराध्यतममहासैद्धान्तः श्रीजिनचन्द्रभट्टारकस्तच्छिष्यपण्डितश्रीभास्करनन्दिविरचित-
महाशास्त्रतत्त्वार्थवृत्तौ सुखबोधायां
दशमोऽध्यायस्समाप्तः

॥ समाप्तोऽयं ग्रन्थः॥

---

# परिशिष्टम्—१.

## * तत्त्वार्थाधिगमसूत्राणि

सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः ॥ १ ॥ तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥ २ ॥ तन्निसर्गादधिगमाद्वा ॥ ३ ॥ जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षास्तत्त्वम् ॥ ४ ॥ नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ ५ ॥ प्रमाणनयैरधिगमः ॥ ६ ॥ निर्देश-स्वामित्वसाधनाधिकरणस्थितिविधानतः ॥ ७ ॥ सत्सङ्ख्याक्षेत्रस्पर्शनकालान्तर-भावाल्पबहुत्वैश्च ॥ ८ ॥ मतिश्रुतावधिमनःपर्ययकेवलानि ज्ञानम् ॥ ९ ॥ तत् प्रमाणे ॥ १० ॥ आद्ये परोक्षम् ॥ ११ ॥ प्रत्यक्षमन्यत् ॥ १२ ॥ मतिः स्मृतिः संज्ञा चिन्ता मिनिबोध इत्यनर्थान्तरम् ॥ १३ ॥ तदिन्द्रियानिन्द्रियनिमित्तम् ॥ १४ ॥ अवग्रहे-हावायधारणाः ॥ १५ ॥ बहुबहुविधक्षिप्रानिःसृतानुक्तध्रुवाणां सेतराणाम् ॥ १६ ॥ अर्थस्य ॥ १७ ॥ व्यञ्जनस्यावग्रहः ॥ १८ ॥ न चक्षुरनिन्द्रियाभ्याम् ॥ १९ ॥ श्रुतं मतिपूर्वं द्व्यनेकद्वादशभेदम् ॥ २० ॥ [1] भवप्रत्ययोऽवधिर्देवनारकाणाम् ॥ २१ ॥ क्षयो-पशमनिमित्तः षड्विकल्पः शेषाणाम् ॥ २२ ॥ ऋजुविपुलमती मनःपर्ययः ॥ २३ ॥ विशुद्ध्यप्रतिपाताभ्यां तद्विशेषः ॥ २४ ॥ विशुद्धिक्षेत्रस्वामिविषयेभ्योऽवधिमनः-पर्ययोः ॥ २५ ॥ [2] मतिश्रुतयोर्निबन्धो द्रव्येष्वसर्वपर्यायेषु ॥ २६ ॥ रूपिष्ववधेः ॥ २७ ॥ तदनन्तभागे मनःपर्ययस्य ॥ २८ ॥ सर्वद्रव्यपर्यायेषु केवलस्य ॥ २९ ॥ एकादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ३० ॥ मतिश्रुतावधयो विपर्ययश्च ॥ ३१ ॥ सदसतोरविशेषाद्यदृच्छोपलब्धेरुन्मत्तवत् ॥ ३२ ॥ [3] नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्द-समभिरूढैवंभूता नयाः ॥ ३३ ॥

ज्ञानदर्शनयोस्तत्त्वं नयानां चैव लक्षणम् ।
ज्ञानस्य च प्रमाणत्वमध्यायेऽस्मिन्निरूपितम् ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे प्रथमोऽध्यायः ॥

---

* श्वेताम्बरजैनाम्नायानुसारेण ये च खलु पाठभेदाः परिदृश्यन्ते तेऽत्राऽऽदशमाध्यायमितो दर्शयिष्यन्ते । तथा हि—[1] "द्विविधोऽवधिः ॥ २१ ॥ भवप्रत्ययो नारकदेवानाम् ॥ २२ ॥ यथोक्तनिमित्तः षड्विकल्पः शेषाणाम् ॥ २३ ॥" इत्यस्ति सूत्रक्रमः. [2] मतिश्रुतयोर्निबन्धः सर्वद्रव्येष्वसर्वपर्यायेषु. [3] नैगमसङ्ग्रहव्यवहारर्जुसूत्रशब्दा नयाः ॥ ३४ ॥ आद्यशब्दौ द्वित्रिभेदौ ॥ ३५ ॥

औपशमिकक्षायिकौ भावौ मिश्रश्च जीवस्य स्वतत्त्वमौदयिकपारिणामिकौ च ॥ १ ॥ द्विनवाष्टादशैकविंशतित्रिभेदा यथाक्रमम् ॥ २ ॥ सम्यक्त्वचारित्रे ॥ ३ ॥ ज्ञानदर्शनदानलाभभोगोपभोगवीर्याणि च ॥ ४ ॥ [1] ज्ञानाज्ञानदर्शनलब्धयश्चतुस्त्रित्रिपञ्चभेदाः सम्यक्त्वचारित्रसंयमासंयमाश्च ॥ ५ ॥ [2] गतिकषायलिङ्गमिथ्यादर्शनाऽज्ञानाऽसंयताऽसिद्धलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः ॥ ६ ॥ [3] जीवभव्याऽभव्यत्वानि च ॥ ७ ॥ उपयोगो लक्षणम् ॥ ८ ॥ स द्विविधोऽष्टचतुर्भेदः ॥ ९ ॥ संसारिणो मुक्ताश्च ॥ १० ॥ समनस्काऽमनस्काः ॥ ११ ॥ संसारिणस्त्रसस्थावराः ॥ १२ ॥ [4] पृथिव्यप्तेजोवायुवनस्पतयः स्थावराः ॥ १३ ॥ द्वीन्द्रियादयस्त्रसाः ॥ १४ ॥ पञ्चेन्द्रियाणि ॥ १५ ॥ द्विविधानि ॥ १६ ॥ निर्वृत्त्युपकरणे द्रव्येन्द्रियम् ॥ १७ ॥ लब्ध्युपयोगौ भावेन्द्रियम् ॥ १८ ॥ [5] स्पर्शनरसनघ्राणचक्षुःश्रोत्राणि ॥ १९ ॥ [6] स्पर्शरसगन्धवर्णशब्दास्तदर्थाः ॥ २० ॥ श्रुतमनिन्द्रियस्य ॥ २१ ॥ [7] वनस्पत्यन्तानामेकम् ॥ २२ ॥ क्रिमिपिपीलिकाभ्रमरमनुष्यादीनामेकैकवृद्धानि ॥२३॥ संज्ञिनः समनस्काः ॥२४॥ विग्रहगतौ कर्मयोगः ॥ २५ ॥ अनुश्रेणि गतिः ॥ २६ ॥ अविग्रहा जीवस्य ॥ २७ ॥ विग्रहवती च संसारिणः प्राक्चतुर्भ्यः ॥ २८ ॥ [8] एकसमयाऽविग्रहा ॥ २९ ॥ [9] एकं द्वौ त्रीन्वाऽनाहारकः ॥ ३० ॥ [10] सम्मूर्छनगर्भोपपादा जन्म ॥ ३१ ॥ सचित्तशीतसंवृताः सेतरा मिश्राश्चैकशस्तद्योनयः॥ ३२ ॥ [11] जरायुजाण्डजपोतानां गर्भः ॥३३॥ [12] देवनारकाणामुपपादः ॥ ३४ ॥ शेषाणां सम्मूर्छनम् ॥ ३५ ॥ [13] औदारिकवैक्रियिकाहारकतैजसकार्मणानि शरीराणि ॥ ३६ ॥ परं परं सूक्ष्मम् ॥३७॥ प्रदेशतोऽसङ्ख्येयगुणं प्राक्तैजसात्॥ ३८ ॥ अनन्तगुणे परे ॥ ३९ ॥ अप्रतिघाते ॥ ४० ॥ अनादिसम्बन्धे च ॥ ४१ ॥ सर्वस्य ॥ ४२ ॥ [14] तदादीनि भाज्यानि युगपदेकस्मिन्नाचतुर्भ्यः ॥ ४३ ॥ निरुपभोगमन्त्यम् ॥ ४४ ॥

---

[1] ज्ञानाज्ञानदर्शनदानादिलब्धयश्चतुस्त्रित्रिपञ्चभेदा यथाक्रमं सम्यक्त्वचारित्रसंयमाऽसंयमाश्च ॥ ५ ॥ [2] गतिकषायलिङ्गमिथ्यादर्शनाऽज्ञानाऽसंयताऽसिद्धत्वलेश्याश्चतुश्चतुस्त्र्येकैकैकैकषड्भेदाः ॥ ६ ॥ [3] जीवभव्याऽभव्यत्वादीनि च ॥ ७ ॥ [4] पृथिव्यम्बुवनस्पतयः स्थावराः ॥ १३ ॥ तेजोवायू द्वीन्द्रियादयश्च त्रसाः ॥ १४ ॥ [5] अत्रैकान्नसङ्ख्याकमधिकं सूत्रमिदं "उपयोगः स्पर्शादिषु" ॥ १९ ॥ [6] स्पर्शरसगन्धवर्णशब्दास्तेषामर्थाः ॥ २१ ॥ [7] वाय्वन्तानामेकम् ॥ २३ ॥ [8] एकसमयोऽविग्रहः ॥ ३० ॥ [9] एकं द्वौ वानाहारकः ॥ ३१ ॥ [10] सम्मूर्छनगर्भोपपाता जन्म ॥ ३२ ॥ [11] जराय्वण्डपोतजानां गर्भः ॥ ३४ ॥ [12] नारकदेवानामुपपातः ॥ ३५ ॥ [13] औदारिकवैक्रियाहारकतैजसकार्मणानि शरीराणि ॥ ३७ ॥ [14] तदादीनि भाज्यानि युगपदेकस्याचतुर्भ्यः ॥ ४४ ॥

गर्भसम्मूर्छनजमाद्यम् ॥ ४५ ॥ [1]औपपादिकं वैक्रियिकम् ॥ ४६ ॥ लब्धिप्रत्ययं च ॥ ४७ ॥ [2]तैजसमपि ॥ ४८ ॥ [3]शुभं विशुद्धमव्याघाति चाहारकं प्रमत्तसंयतस्यैव ॥ ४९ ॥ नारकसम्मूर्छिनो नपुंसकानि ॥ ५० ॥ न देवाः ॥ ५१ ॥ [4]शेषास्त्रिवेदाः ॥ ५२ ॥ [5]औपपादिकचरमोत्तमदेहाऽसङ्ख्येयवर्षायुषोऽनपवर्त्यायुषः ॥ ५३ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे द्वितीयोऽध्यायः ॥

---

[6]रत्नशर्करावालुकापङ्कधूमतमोमहातमःप्रभाभूमयो घनाम्बुवाताकाशप्रतिष्ठाः सप्ताऽधोऽधः ॥ १ ॥ [7]तासु त्रिंशत्पञ्चविंशतिपञ्चदशदशत्रिपञ्चोनैकनरकशतसहस्राणि पञ्च चैव यथाक्रमम् ॥ २ ॥ नारका नित्याऽशुभतरलेश्यापरिणामदेहवेदनाविक्रियाः ॥ ३ ॥ परस्परोदीरितदुःखाः ॥ ४ ॥ संक्लिष्टाऽसुरोदीरितदुःखाश्च प्राक्चतुर्थ्याः ॥ ५ ॥ तेष्वेक त्रि सप्त दश सप्तदश द्वाविंशति त्रयस्त्रिंशत्सागरोपमा सत्त्वानां परा स्थितिः ॥ ६ ॥ [8]जम्बूद्वीपलवणोदादयः शुभनामानो द्वीपसमुद्राः ॥ ७ ॥ द्विर्द्विर्विष्कम्भाः पूर्वपूर्वपरिक्षेपिणो वलयाकृतयः ॥ ८ ॥ तन्मध्ये मेरुनाभिर्वृत्तो योजनशतसहस्र-विष्कम्भो जम्बूद्वीपः ॥ ९ ॥ [9]भरतहैमवतहरिविदेहरम्यकहैरण्यवतैरावतवर्षाः क्षेत्राणि ॥ १० ॥ तद्विभाजिनः पूर्वापरायता हिमवन्महाहिमवन्निषधनीलरुक्मिशिख-रिणो वर्षधरपर्वताः ॥ ११ ॥ [10]हेमार्जुनतपनीयवैडूर्यरजतहेममयाः ॥ १२ ॥ मणि-विचित्रपार्श्वा उपरि मूले च तुल्यविस्ताराः ॥ १३ ॥ पद्ममहापद्मतिगिञ्छकेसरि-महापुण्डरीकपुण्डरीका ह्रदास्तेषामुपरि ॥ १४ ॥ प्रथमो योजनसहस्रायामस्तदर्ध-विष्कम्भो ह्रदः ॥ १५ ॥ दशयोजनावगाहः ॥ १६ ॥ तन्मध्ये योजनं पुष्करम् ॥ १७ ॥ तद्द्विगुणद्विगुणा ह्रदाः पुष्काराणि च ॥ १८ ॥ तन्निवासिन्यो देव्यः श्रीह्रीधृतिकीर्तिबुद्धिलक्ष्म्यः पल्योपमस्थितयः ससामानिकपरिषत्काः ॥ १९ ॥ गङ्गासिन्धुरोहिद्रोहितास्याहरिद्धरिकान्ताशीताशीतोदानारीनरकान्तासुवर्णकूलारूप्य - कूलारक्तारक्तोदाः सरितस्तन्मध्यगाः ॥ २० ॥ द्वयोर्द्वयोः पूर्वाः पूर्वगाः ॥ २१ ॥

---

[1] वैक्रियमौपपातिकम् ॥ ४७ ॥ [2] नेदं सूत्रमस्ति. [3] शुभं विशुद्धमव्याघाति चाहा-रकं चतुर्दशपूर्वधरस्यैव ॥ ४९ ॥ [4] नेदं सूत्रमस्ति. [5] औपपातिकचरमदेहोत्तमपुरुषाऽसङ्ख्येय-वर्षायुषोऽनपवर्त्यायुषः ॥ ५२ ॥ [6] रत्नशर्करावालुकापङ्कधूमतमोमहातमःप्रभाभूमयो घनाम्बुवाता-काशप्रतिष्ठाः सप्ताऽधोऽधः पृथुतराः ॥ १ ॥ [7] तासु नरकाः ॥ २ ॥ [8] लवणादयः— [9] सूत्रस्याऽस्यादौ "तत्र" इति पदमधिकं वर्तते. [10] इति आद्यात्रिंशत्सूत्रमेकविंशतिसूत्राणि न सन्ति.

शेषास्त्वपरगाः ॥ २२ ॥ चतुर्दशनदीसहस्रपरिवृता गङ्गासिन्ध्वादयो नद्यः ॥ २३ ॥ भरतः षड्विंशपञ्चयोजनशतविस्तारः षट्चैकान्नविंशतिभागा योजनस्य ॥ २४ ॥ तद्द्विगुणद्विगुणविस्तारा वर्षधरवर्षा विदेहान्ताः ॥ २५ ॥ उत्तरा दक्षिणतुल्याः ॥ २६ ॥ भरतैरावतयोर्वृद्धिह्रासौ षट्समयाभ्यामुत्सर्पिण्यवसर्पिणीभ्याम् ॥ २७ ॥ ताभ्यामपरा भूमयोऽवस्थिताः ॥ २८ ॥ एकद्वित्रिपल्योपमस्थितयो हैमवतकहारिवर्षकदैवकुरवकाः ॥ २९ ॥ तथोत्तराः ॥ ३० ॥ विदेहेषु सङ्ख्येयकालाः ॥३१ ॥ भरतस्य विष्कम्भो जम्बूद्वीपस्य नवतिशतभागः ॥ ३२ ॥ द्विर्धातकीखण्डे ॥ ३३ ॥ पुष्करार्धे च ॥ ३४ ॥ प्राङ्मानुषोत्तरान्मनुष्याः ॥ ३५ ॥ आर्या म्लेच्छाश्च ॥ ३६ ॥ भरतैरावतविदेहाः कर्मभूमयोऽन्यत्र देवकुरूत्तरकुरुभ्यः ॥ ३७ ॥ नृस्थिती परावरे त्रिपल्योपमान्तर्मुहूर्ते ॥ ३८ ॥ [1] तिर्यग्योनिजानां च ॥ ३९ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे तृतीयोऽध्यायः ॥

---

देवाश्चतुर्निकायाः ॥ १ ॥ [2] आदितस्त्रिषु पीतान्तलेश्याः ॥ २ ॥ दशाष्टपञ्चद्वादशविकल्पाः कल्पोपपन्नपर्यन्ताः ॥ ३ ॥ इन्द्रसामानिकत्रायस्त्रिंश[3]पारिषदात्मरक्षलोकपालानीकप्रकीर्णकाभियोग्यकिल्विषिकाश्चैकशः ॥ ४ ॥ त्रायस्त्रिंशलोकपालवर्ज्या व्यन्तरज्योतिष्काः ॥ ५ ॥ पूर्वयोर्द्वीन्द्राः ॥ ६ ॥ [4] कायप्रवीचारा आ ऐशानात् ॥ ७ ॥ [5] शेषाः स्पर्शरूपशब्दमनःप्रवीचाराः ॥ ८ ॥ परेऽप्रवीचाराः ॥ ९ ॥ भवनवासिनोऽसुरनागविद्युत्सुपर्णाऽग्निवातस्तनितोदधिद्वीपदिक्कुमाराः ॥ १० ॥ व्यन्तराः किन्नरकिंपुरुषमहोरगगन्धर्वयक्षराक्षसभूतपिशाचाः ॥ ११ ॥ [6] ज्योतिष्काः सूर्याचन्द्रमसौ ग्रहनक्षत्रप्रकीर्णकतारकाश्च ॥ १२ ॥ मेरुप्रदक्षिणा नित्यगतयो नृलोके ॥ १३ ॥ तत्कृतः कालविभागः ॥ १४ ॥ बहिरवस्थिताः ॥ १५ ॥ वैमानिकाः ॥ १६ ॥ कल्पोपपन्नाः कल्पातीताश्च ॥ १७ ॥ उपर्युपरि ॥ १८ ॥ [7] सौधर्मैशानसानत्कुमारमाहेन्द्रब्रह्मब्रह्मोत्तरलान्तवकापिष्ठशुक्रमहाशुक्रशतारसहस्रारेष्वानतप्राणतयोरारणाच्युत-

---

1 तिर्यग्योनीनां च ॥ १८ ॥ 2 तृतीयः पीतलेश्यः. 3 पारिषद्य. 4 अत्र "पीतान्तलेश्याः ॥ ७ ॥" इत्यस्त्यधिकं सूत्रम्. 5 शेषाः स्पर्शरूपशब्दमनःप्रवीचारा द्वयोर्द्वयोः ॥ ९ ॥ 6 ज्योतिष्काः सूर्याश्चन्द्रमसो ग्रहनक्षत्रप्रकीर्णतारकाश्च ॥ १३ ॥ 7 सौधर्मैशानसानत्कुमारमाहेन्द्रब्रह्मलोकलान्तकमहाशुक्रसहस्रारेष्वानतप्राणतयोरारणाच्युतयोर्नवसु ग्रैवेयकेषु विजयवैजयन्तजयन्ताऽपराजितेषु सर्वार्थसिद्धे च ॥ २० ॥

**योर्नवसु ग्रैवेयकेषु विजयवैजयन्तजयन्तापराजितेषु सर्वार्थसिद्धौ च ॥ १९ ॥ स्थितिप्रभावसुखद्युतिलेश्याविशुद्धीन्द्रियावधिविषयतोऽधिकाः ॥ २० ॥ गतिशरीर-परिग्रहाभिमानतो हीनाः ॥ २१ ॥ पीतपद्मशुक्ललेश्या द्वित्रिशेषेषु ॥ २२ ॥ प्राग्ग्रैवेयकेभ्यः कल्पाः ॥ २३ ॥ [1] ब्रह्मलोकालया लौकान्तिकाः ॥ २४ ॥ [2] सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाधाऽरिष्टाश्च ॥ २५ ॥ विजयादिषु द्विचरमाः ॥ २६ ॥ [3] औपपादिकमनुष्येभ्यः शेषास्तिर्यग्योनयः ॥ २७ ॥ [4] स्थितिरसुरनागसुपर्णद्वीपशेषाणां सागरोपमत्रिपल्योपमार्धहीनमिता ॥ २८ ॥ सौधर्मै-शानयोः सागरोपमे अधिके ॥ २९ ॥ सानत्कुमारमाहेन्द्रयोः सप्त ॥ ३० ॥ [5] त्रिसप्तनवैकादशत्रयोदशपञ्चदशभिरधिकानि तु ॥ ३१ ॥ आरणाच्युतादूर्ध्वमेकैकेन नवसु ग्रैवेयकेषु विजयादिषु [6] सर्वार्थसिद्धौ च ॥ ३२ ॥ [7] अपरा पल्योपममधिकम् ॥ ३३ ॥ [8] परतः परतः पूर्वापूर्वाऽनन्तरा ॥ ३४ ॥ नारकाणां च द्वितीयादिषु ॥ ३५ ॥ दशवर्षसहस्राणि प्रथमायाम् ॥ ३६ ॥ भवनेषु च ॥ ३७ ॥ व्यन्तराणां च ॥ ३८ ॥ [9] परा पल्योपममधिकम् ॥ ३९ ॥ [10] ज्योतिष्काणां च ॥ ४० ॥ [11] तदष्टभागोऽपरा ॥ ४१ ॥ लौकान्तिकानामष्टौ सागरोपमाणि सर्वेषाम् ॥ ४२ ॥**

इति तत्वार्थाधिगमे मोक्षशास्त्रे चतुर्थोऽध्यायः ॥

---

**अजीवकाया धर्माऽधर्माकाशपुद्गलाः ॥ १ ॥ [12] द्रव्याणि ॥ २ ॥ जीवाश्च ॥ ३ ॥ नित्याऽवस्थितान्यरूपाणि ॥ ४ ॥ रूपिणः पुद्गलाः ॥ ५ ॥ [13] आ आकाशादेकद्रव्याणि**

---

[1] ब्रह्मलोकालया लोकान्तिकाः ॥ २५ ॥ [2] सारस्वतादित्यवह्न्यरुणगर्दतोयतुषिताव्याबाध-मरुतोऽरिष्टाश्च ॥ २६ ॥ [3] औपपातिक— [4] इत एवमस्ति सूत्रानुक्रमः " स्थितिः ॥ २९ ॥ भवनेषु दक्षिणार्धाधिपतीनां पल्योपममध्यर्धम् ॥ ३० ॥ शेषाणां पादोने ॥ ३१ ॥ असुरेन्द्रयोः सागरोपममधिकं च ॥ ३२ ॥ सैाधर्मादिषु यथाक्रमम् ॥ ३३ ॥ सागरोपमे ॥ ३४ ॥ अधिके च ॥ ३५ ॥ सप्त सानत्कुमारे ॥ ३६ ॥ " [5] विशेषत्रिसप्तदशैकादशपञ्चदशभिरधिकानि च ॥ ३७ ॥ [6] सर्वार्थसिद्धे च ॥ ३८ ॥ [7] अपरा पल्योपममधिकं च ॥ ३९ ॥ [8] अत्रेदं सूत्रद्वयमधिकमस्ति " सागरोपमे ॥ ४० ॥ अधिके च ॥ ४१ ॥ " [9] परा पल्योपमम् ॥ ४७ ॥ [10] ज्योतिष्काणा-मधिकम् ॥ ४८ ॥ [11] इतः सूत्रक्रम एवमस्ति " ग्रहाणामेकम् ॥ ४९ ॥ नक्षत्राणामर्धम् ॥ ५० ॥ ताराकाणां चतुर्भागः ॥ ५१ ॥ जघन्या त्वष्टभागः ॥ ५२ ॥ चतुर्भागः शेषाणाम् ॥ ५३ ॥ " [12] " द्रव्याणि जीवाश्च " इत्येकमस्ति सूत्रम्. [13] आकाशादेकद्रव्याणि ॥ ५ ॥

॥ ६ ॥ निष्क्रियाणि च ॥ ७ ॥ [1] असङ्ख्येयाः प्रदेशा धर्माऽधर्मैकजीवानाम् ॥ ८ ॥ आकाशस्याऽनन्ताः ॥ ९ ॥ सङ्ख्येयाऽसङ्ख्येयाश्च पुद्गलानाम् ॥ १० ॥ नाणोः ॥ ११ ॥ लोकाकाशेऽवगाहः ॥ १२ ॥ धर्माऽधर्मयोः कृत्स्ने ॥ १३ ॥ एकप्रदेशादिषु भाज्यः पुद्गलानाम् ॥ १४ ॥ असङ्ख्येयभागादिषु जीवानाम् ॥ १५ ॥ [2] प्रदेशसंहार-विसर्पाभ्यां प्रदीपवत् ॥ १६ ॥ [3] गतिस्थित्युपग्रहौ धर्माऽधर्मयोरुपकारः ॥ १७ ॥ आकाशस्याऽवगाहः ॥ १८ ॥ शरीरवाङ्मनःप्राणापानाः पुद्गलानाम् ॥ १९ ॥ सुख-दुःखजीवितमरणोपग्रहश्च ॥ २० ॥ परस्परोपग्रहो जीवानाम् ॥ २१ ॥ [4] वर्तनापरिणाम-क्रियाः परत्वाऽपरत्वे च कालस्य ॥ २२ ॥ स्पर्शरसगन्धवर्णवन्तः पुद्गलाः ॥ २३ ॥ शब्दबन्धसौक्ष्म्यस्थौल्यसंस्थानभेदतमश्छायातपोद्योतवन्तश्च ॥२४ ॥ अणवः स्कन्धाश्च ॥ २५ ॥ [5] भेदसङ्घातेभ्य उत्पद्यन्ते ॥ २६ ॥ भेदादणुः ॥ २७ ॥ भेदसङ्घाताभ्यां [6] चाक्षुषः ॥ २८ ॥ [7] सद्द्रव्यलक्षणम् ॥ २९ ॥ उत्पादव्ययध्रौव्ययुक्तं सत् ॥ ३० ॥ तद्भावाव्ययं नित्यम् ॥ ३१ ॥ अर्पितानर्पितसिद्धेः ॥ ३२ ॥ स्निग्धरूक्षत्वाद्बन्धः ॥ ३३ ॥ न जघन्यगुणानाम् ॥ ३४ ॥ गुणसाम्ये सदृशानाम् ॥ ३५ ॥ द्व्यधिकादिगुणानां तु ॥ ३६ ॥ [8] बन्धेऽधिकौ पारिणामिकौ च ॥ ३७ ॥ [9] गुणपर्ययवद्द्रव्यम् ॥ ३८ ॥ [10] कालश्च ॥ ३९ ॥ सोऽनन्तसमयः ॥ ४० ॥ द्रव्याश्रया निर्गुणा गुणाः ॥ ४१ ॥ तद्भावः परिणामः ॥ ४२ ॥ [11]

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे पञ्चमोऽध्यायः ॥

---

कायवाङ्मनःकर्म योगः ॥ १ ॥ स आस्रवः ॥ २ ॥ [12] शुभः पुण्यस्याऽशुभः पापस्य ॥ ३ ॥ सकषायाऽकषाययोः साम्परायिकेर्यापथयोः ॥ ४ ॥ इन्द्रियकषाय-

---

[1] असङ्ख्येयाः प्रदेशा धर्माधर्मयोः ॥ ७ ॥ जीवस्य ॥ ८ ॥ [2] प्रदेशसंहारविसर्गाभ्यां प्रदीपवत् ॥ १६ ॥ [3] गतिस्थित्युपग्रहो धर्माऽधर्मयोरुपकारः ॥ १७ ॥ "मरणोपग्रहाश्च" इति राजवार्त्तिकादौ च पाठः. [4] वर्तना परिणामः क्रिया परत्वाऽपरत्वे च कालस्य ॥ २२ ॥ [5] सङ्घातभेदेभ्य उत्पद्यन्ते ॥ २६ ॥ [6] चाक्षुषाः. [7] सूत्रमिदं राजवार्त्तिके च नास्ति सूत्ररूपेण. [8] बन्धे समाधिकौ पारिणामिकौ ॥ ३६ ॥ [9] गुणपर्यायवद्द्रव्यम् ॥ ३७ ॥ [10] कालश्चेत्येके ॥ ३८ ॥ [11] अत्रेमानि त्रीण्यधिकसूत्राणि दृश्यन्ते "अनादिरादिमांश्च ॥ ४२ ॥ रूपिष्वादिमान् ॥ ४३ ॥ योगोपयोगौ जीवेषु ॥ ४४ ॥" [12] "शुभः पुण्यस्य ॥ ३ ॥ अशुभः पापस्य ॥ ४ ॥" इति पार्थक्येन सूत्रद्वयोल्लेखोऽस्ति.

व्रतक्रियाः पञ्चचतुःपञ्चपञ्चविंशतिसङ्ख्याः पूर्वस्य भेदाः ॥ ५ ॥ [1] तीव्रमन्दज्ञाताऽज्ञातभावाधिकरणवीर्यविशेषेभ्यस्तद्विशेषः ॥ ६ ॥ अधिकरणं जीवाऽजीवाः ॥ ७ ॥ आद्यं संरम्भसमारम्भारम्भयोगकृतकारितानुमतकषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकशः ॥ ८ ॥ निर्वर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परम् ॥ ९ ॥ तत्प्रदोषनिह्नवमात्सर्यान्तरायासादनोपघाता ज्ञानदर्शनावरणयोः ॥ १० ॥ दुःखशोक[2]तापक्रन्दनवधपरिदेवनान्यात्मपरोभयस्थान्यसद्वेद्यस्य ॥ ११ ॥ [3] भूतव्रत्यनुकम्पादानसरागसंयमादियोगः क्षान्तिः शौचमिति सद्वेद्यस्य ॥ १२ ॥ केवलिश्रुतसङ्घधर्मदेवावर्णवादो दर्शनमोहस्य ॥ १३ ॥ कषायोदयात्तीव्रपरिणामश्चारित्रमोहस्य ॥ १४ ॥ [4] बह्वारम्भपरिग्रहत्वं नारकस्यायुषः ॥ १५ ॥ माया तैर्यग्योनस्य ॥ १६ ॥ [5] अल्पारम्भपरिग्रहत्वं मानुषस्य ॥ १७ ॥ [6] स्वभावमार्दवं च ॥ १८ ॥ निःशीलव्रतत्वं च सर्वेषाम् ॥ १९ ॥ सरागसंयमसंयमासंयमाऽकामनिर्जरा बालतपांसि दैवस्य ॥ २० ॥ सम्यक्त्वं च ॥ २१ ॥ योगवक्रता विसंवादनं चाऽशुभस्य नाम्नः ॥ २२ ॥ [7] तद्विपरीतं शुभस्य ॥ २३ ॥ [8] दर्शनविशुद्धिर्विनयसम्पन्नता शीलव्रतेष्वनतिचारोऽभीक्ष्णज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी साधुसमाधि[9]र्वैयापृत्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकाऽपरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकरत्वस्य ॥ २४ ॥ परात्मनिन्दाप्रशंसे सदसद्गुणच्छादनोद्भावने च नीचैर्गोत्रस्य ॥ २५ ॥ तद्विपर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य ॥ २६ ॥ विघ्नकरणमन्तरायस्य ॥ २७ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे षष्ठोऽध्यायः ॥

---

हिंसाऽनृतस्तेयाऽब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् ॥ १ ॥ देशसर्वतोऽणुमहती ॥ २ ॥ तत्स्थैर्यार्थं भावनाः पञ्च पञ्च ॥ ३ ॥ [10] वाङ्मनोगुप्तीर्यादाननिक्षेपणसमित्यालोकित-

---

[1] तीव्रमन्दज्ञाताऽज्ञातभाववीर्याधिकरणविशेषेभ्यस्तद्विशेषः ॥ ७ ॥ [2] राजवार्त्तिकादौ च "तापाक्रन्दन" इति पाठः. [3] भूतव्रत्यनुकम्पादानं सरागसंयमादियोगः क्षान्तिः शौचमिति सद्वेद्यस्य ॥ १३ ॥ [4] अल्पारम्भपरिग्रहत्वं स्वभावमार्दवार्जवं च मानुषस्य ॥ १८ ॥ [5] नेदं पृथक्सूत्रमस्ति. [6] नास्तीदमपि सूत्रम्. [7] विपरीतं शुभस्य ॥ २२ ॥ [8] दर्शनविशुद्धिर्विनयसम्पन्नता शीलव्रतेष्वनतिचारोभिक्ष्णज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी सङ्घसाधुसमाधिवैयावृत्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकाऽपरिहाणिर्मार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकृत्त्वस्य ॥ २३ ॥ [9] राजवार्त्तिकादौ च "वैयावृत्यकरण" मिति पाठः. [10] इत आअष्टमसूत्रं पञ्चसूत्राणि न सन्ति.

पानभोजनानि पञ्च ॥ ४ ॥ क्रोधलोभभीरुत्वहास्यप्रत्याख्यानान्यनुवीचिभाषणं च पञ्च ॥ ५ ॥ शून्यागारविमोचितावासपरोपरोधाकरण [1] भैक्ष्यशुद्धि [2] सधर्माऽविसंवादाः पञ्च ॥ ६ ॥ स्त्रीरागकथाश्रवणतन्मनोहराङ्गनिरीक्षणपूर्वरतानुस्मरणवृष्येष्टरसस्व-शरीरसंस्कारत्यागाः पञ्च ॥ ७ ॥ मनोज्ञाऽमनोज्ञेन्द्रियविषयरागद्वेषवर्जनानि पञ्च ॥ ८ ॥ [3] हिंसादिष्विहाऽमुत्राऽपायाऽवद्यदर्शनम् ॥ ९ ॥ दुःखमेव वा ॥ १० ॥ मैत्रीप्रमोद-कारुण्य[4]माध्यस्थ्यानि [5] च सत्त्वगुणाधिकक्लिश्यमानाऽविनयेषु ॥ ११ ॥ जगत्काय-स्वभावौ [6] वा संवेगवैराग्यार्थम् ॥ १२ ॥ प्रमत्तयोगात्प्राणव्यपरोपणं हिंसा ॥ १३ ॥ असदभिधानमनृतम् ॥ १४ ॥ अदत्तादानं स्तेयम् ॥ १५ ॥ मैथुनमब्रह्म ॥ १६ ॥ मूर्छा परिग्रहः ॥ १७ ॥ निःशल्यो व्रती ॥ १८ ॥ अगार्यनगारश्च ॥ १९ ॥ अणुव्रतोऽगारी ॥ २० ॥ दिग्देशाऽनर्थदण्डविरतिसामायिक[7]प्रोषधोपवासोपभोगपरिभोगपरिमाणाऽ-तिथिसंविभागव्रतसंपन्नश्च ॥ २१ ॥ मारणान्तिकीं [8] सल्लेखनां जोषिता ॥ २२ ॥ शङ्का-काङ्क्षाविचिकित्साऽन्यदृष्टिप्रशंसासंस्तवाः सम्यग्दृष्टेरतिचाराः ॥ २३ ॥ व्रतशीलेषु पञ्च पञ्च यथाक्रमम् ॥ २४ ॥ बन्धवध[9]च्छेदातिभारारोपणान्नपाननिरोधाः ॥ २५ ॥ मिथ्योप-देशरहोभ्याख्यानकूटलेखक्रियान्यासापहारसाकारमन्त्रभेदाः ॥ २६ ॥ स्तेनप्रयोगतदा-हृतादानविरुद्धराज्यातिक्रमहीनाधिकमानोन्मानप्रतिरूपकव्यवहाराः ॥ २७ ॥ [10] पर-विवाहकरणेत्वरिकापरिगृहीताऽपरिगृहीतागमनानङ्गक्रीडाकामतीव्राभिनिवेशाः ॥ २८ ॥ क्षेत्रवास्तुहिरण्यसुवर्णधनधान्यदासीदासकुप्यप्रमाणातिक्रमाः ॥ २९ ॥ ऊर्ध्वाधस्तिर्य-ग्व्यतिक्रमक्षेत्रवृद्धि[11]स्मृत्यन्तराधानानि ॥ ३० ॥ आनयनप्रेष्यप्रयोगशब्दरूपाऽनुपातपुद्गल-क्षेपाः ॥ ३१ ॥ [12] कन्दर्पकौत्कुच्यमौखर्याऽसमीक्ष्याधिकरणोपभोगपरिभोगानर्थक्यानि ॥ ॥ ३२ ॥ योगदुष्प्रणिधानानादर[13]स्मृत्यनुपस्थानानि ॥ ३३ ॥ अप्रत्यवेक्षिताऽप्रमार्जितो-त्सर्गादान[14] संस्तरोपक्रमणानादरस्मृत्यनुपस्थानानि ॥ ३४ ॥ सचित्त[15]सम्बन्धसंमिश्रा-भिषवदुष्पक्काहाराः ॥ ३५ ॥ सचित्त[16]निक्षेपापिधानपरव्यपदेशमात्सर्यकालाति-

---

1 "भैक्ष" इति ग्रन्थान्तरेषु पाठः. 2 "सद्धर्माऽविसंवादाः" इति राजवार्त्तिके पाठः. 3 हिंसादिष्विहामुत्र चापायावद्यदर्शनम् ॥ ४ ॥ 4 "माध्यस्थानि" इति राजवार्त्ति-कादौ पाठः. 5 नास्त्ययं "च" शब्दः. 6 "वा" इत्यस्य स्थाने "च" इत्यस्ति. 7 प्रौष-धोपवासोपभोग. 8 संलेखनाम्. 9 च्छविच्छेदानि. 10 परविवाहकरणेत्वरपरिगृहीतापरिगृहीता-गमनानङ्गक्रीडातीव्रकामाभिनिवेशाः ॥ २३ ॥ 11 स्मृत्यन्तर्धानानि ॥ २५ ॥ 12 कन्दर्पकौत्कुच्य-मौखर्यासमीक्ष्याधिकरणोपभोगाधिकत्वानि ॥ २७ ॥ 13 स्मृत्यनुपस्थापनानि ॥ २८ ॥ 14 निक्षेप संस्तारोपक्रमणानादरस्मृत्यनुपस्थापनानि ॥ २९ ॥ 15 सम्बद्ध. 16 निक्षेपपिधान.

क्रमाः ॥ ३६ ॥ जीवितमरणाशंसामित्रानुरागसुखानुबन्ध[1]निदानानि ॥ ३७ ॥ अनुग्रहार्थं स्वस्यातिसर्गो दानम् ॥ ३८ ॥ विधिद्रव्यदातृपात्रविशेषात्तद्विशेषः ॥ ३९ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे सप्तमोऽध्यायः ॥

---

मिथ्यादर्शनाऽविरतिप्रमादकषाययोगा बन्धहेतवः ॥ १ ॥ सकषायत्वाज्जीवः कर्मणो योग्यान्पुद्गला[2]नादत्ते स बन्धः ॥ २ ॥ प्रकृतिस्थित्यनु[3]भवप्रदेशास्तद्विधयः ॥ ३ ॥ आद्यो ज्ञानदर्शनावरणवेदनीय[4]मोहनीयायुर्नामगोत्रान्तरायाः ॥ ४ ॥ पञ्चनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्विपञ्च[5]भेदो यथाक्रमम् ॥ ५ ॥ [6] मतिश्रुताऽवधिमनःपर्ययकेवलानाम् ॥ ६ ॥ चक्षुरचक्षुरवधिकेवलानां निद्रा निद्रानिद्रा प्रचला प्रचलाप्रचला [7] स्त्यानगृद्धयश्च ॥ ७ ॥ सदसद्वेद्ये ॥ ८ ॥ [8] दर्शनचारित्रमोहनीयाऽकषायकषायवेदनीयाख्यास्त्रिद्विनवषोडशभेदाः सम्यक्त्वमिथ्यात्वतदुभयान्यकषायकषायौ हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदा अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभाः ॥ ९ ॥ नारकतैर्यग्योनमानुषदैवानि ॥ १० ॥ गतिजातिशरीराङ्गोपाङ्गनिर्माणबन्धनसङ्घातसंस्थानसंहननस्पर्शरसगन्ध[9]वर्णानुपूर्व्यागुरुलघूपघातपरघातातपोद्योतोच्छ्वासविहायोगतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसूक्ष्मपर्याप्तिस्थिरादेय[10]यशस्कीर्तिसेतराणि तीर्थकरत्वं च ॥ ११ ॥ उच्चैर्नीचैश्च ॥ १२ ॥ [11] दानलाभभोगोपभोगवीर्याणाम् ॥ १३ ॥ आदितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटीकोट्यः परा स्थितिः ॥ १४ ॥ सप्ततिर्मोहनीयस्य ॥ १५ ॥ [12] विंशतिर्नामगोत्रयोः ॥ १६ ॥ त्रयस्त्रिंशत्सागरोपमा[13]ण्यायुषः॥ १७ ॥ अपरा द्वादश मुहूर्ता वेदनीयस्य ॥ १८ ॥ नामगोत्रयोरष्टौ ॥ १९ ॥ [14] शेषाणामन्तर्मुहूर्ता ॥ २० ॥ [15] विपाकोऽनुभवः ॥ २१ ॥ स यथानाम ॥ २२ ॥ ततश्च निर्जरा ॥ २३ ॥

---

[1] निदानकरणानि ॥ ३२ ॥ [2] नादत्ते ॥ २ ॥ स बन्धः ॥ ३ ॥ [3] भाव. [4] मोहनीयायुष्क. [5] भेदा इति श्वेताम्बरजैनग्रन्थेषु श्लोकवार्तिके सर्वार्थसिद्धौ च पाठः. [6] मत्यादीनाम् ॥ ७ ॥ [7] स्त्यानगृद्धिवेदनीयानि च ॥ ८ ॥ [8] दर्शनचारित्रमोहनीयकषायनोकषायवेदनीयाख्यास्त्रिद्विषोडशनवभेदाः सम्यक्त्वमिथ्यात्वतदुभयानि कषायनोकषायावनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभा हास्यरत्यरतिशोकभयजुगुप्सास्त्रीपुंनपुंसकवेदाः ॥ १० ॥ [9] वर्णानुपूर्व्य. [10] यशांसि. [11] दानादीनाम् ॥ १४ ॥ [12] नामगोत्रयोर्विंशतिः ॥ १७ ॥ [13] ण्यायुष्कस्य ॥ १८ ॥ [14] शेषाणामन्तर्मुहूर्तम् ॥ २१ ॥ [15] विपाकोऽनुभावः ॥ २२ ॥

**नामप्रत्ययाः सर्वतो योगविशेषात्सूक्ष्मैक[1]क्षेत्रावगाहस्थिताः सर्वात्मप्रदेशेष्वनन्तानन्तप्रदेशाः ॥ २४ ॥ [2] सद्वेद्यशुभायुर्नामगोत्राणि पुण्यम् ॥ २५ ॥ [3] अतोऽन्यत्पापम् ॥ २६ ॥**

इति तत्त्वार्थाधिगमे मोक्षशास्त्रेऽष्टमोऽध्यायः ॥

---

**आस्रवनिरोधः संवरः ॥ १ ॥ स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः ॥ २ ॥ तपसा निर्जरा च ॥ ३ ॥ सम्यग्योगनिग्रहो गुप्तिः ॥ ४ ॥ ईर्याभाषैषणादाननिक्षेपोत्सर्गाः समितयः ॥ ५ ॥ [4] उत्तमक्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याणि धर्मः ॥ ६ ॥ अनित्याऽशरणसंसारैकत्वाऽन्यत्वा[5]शुच्यास्रवसंवरनिर्जरालोकबोधिदुर्लभधर्मस्वाख्यातत्वानुचिन्तनमनुप्रेक्षाः ॥ ७ ॥ मार्गाऽच्यवननिर्जरार्थं [6] परिसोढव्याः परीषहाः ॥ ८ ॥ क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्याऽरतिस्त्रीचर्यानिषद्याशय्याक्रोशवधयाचनाऽलाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाऽज्ञानादर्शनानि ॥ ९ ॥ सूक्ष्म[7]साम्परायच्छद्मस्थवीतरागयोश्चतुर्दश ॥ १० ॥ एकादशजिने ॥ ११ ॥ बादर[8]साम्पराये सर्वे ॥ १२ ॥ ज्ञानावरणे प्रज्ञाऽज्ञाने ॥ १३ ॥ दर्शनमोहान्तराययोरदर्शनालाभौ ॥ १४ ॥ चारित्रमोहे नाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनासत्कारपुरस्काराः ॥ १५ ॥ वेदनीये शेषाः ॥ १६ ॥ एकादयो भाज्या [9] युगपदेकस्मिन्नैकान्नविंशतेः ॥ १७ ॥ [10] सामायिकच्छेदोपस्थापनापरिहारविशुद्धिसूक्ष्मसाम्पराययथाख्यातमिति चारित्रम् ॥ १८ ॥ अनशनावमौदर्यवृत्तिपरिसङ्ख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशा बाह्यं तपः ॥ १९ ॥ प्रायश्चित्तविनय[11]वैयापृत्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरम् ॥ २० ॥ नवचतुर्दशपञ्चद्वि[12]भेदं यथाक्रमं प्राग्ध्यानात् ॥ २१ ॥ आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदपरिहारोप[13]स्थापनाः ॥ २२ ॥ ज्ञान-**

---

1 क्षेत्रावगाढस्थिताः. 2 सद्वेद्यसम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्राणि पुण्यम् ॥ २६ ॥ 3 नैतत्सूत्रमस्ति. 4 उत्तमः क्षमा. 5 ऽशुचित्वास्रव. 6 परिषोढव्याः इत्येव प्रयोगो दृश्यते राजवार्तिकादौ श्वे–ग्रन्थेषु च ; किन्तु ' सोढः ८-३-११५ ' इति सिद्धान्तकौमुदीव्याकरणसूत्रनियमानुसारेण षत्वस्यात्र नावकाशः. 7 सम्पराय. 8 सम्पराये. 9 युगपदेकोनविंशतेः. 10 सामायिकच्छेदोपस्थाप्यपरिहारविशद्धिसूक्ष्मसम्पराययथाख्यातानि चारित्रम् ॥ ९८ ॥ 11 वैयावृत्य–इति राजवार्तिकादौ च. 12 द्विभेदा इति श्लोकवार्तिके सर्वार्थसिद्धौ च. 13 स्थापनानि॥२२॥

दर्शनचारित्रोपचाराः ॥ २३ ॥ आचार्योपाध्यायतपस्वि[1]शैक्षग्लानगणकुलसङ्घसाधु-[2]मनोज्ञानाम् ॥ २४ ॥ वाचनापृच्छनाऽनुप्रेक्षाम्नायधर्मोपदेशाः ॥ २५ ॥ बाह्याभ्यन्तरोपध्योः ॥ २६ ॥ उत्तमसंहननस्यैकाग्रचिन्तानिरोधो [3]ध्यानमान्तर्मुहूर्तात् ॥ २७ ॥ आर्तरौद्र[4]धर्म्यशुक्लानि ॥ २८ ॥ परे मोक्षहेतू ॥ २९ ॥ [5]आर्तममनोज्ञस्य सम्प्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारः ॥ ३० ॥ [6]विपरीतं मनोज्ञस्य ॥ ३१ ॥ वेदनायाश्च ॥ ३२ ॥ निदानं च ॥ ३३ ॥ तदविरतदेशविरतप्रमत्तसंयतानाम् ॥ ३४ ॥ हिंसानृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेशविरतयोः ॥ ३५ ॥ आज्ञाऽपायविपाकसंस्थानविचयाय [7]धर्म्यम् ॥ ३६ ॥ शुक्ले चाद्ये पूर्वविदः ॥ ३७ ॥ परे केवलिनः ॥ ३८ ॥ पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपाति[8]व्युपरतक्रियानिवृत्तीनि ॥ ३९ ॥ [9]त्र्येकयोगकाययोगायोगानाम् ॥ ४० ॥ एकाश्रये [10]सवितर्कविचारे पूर्वे ॥ ४१ ॥ अविचारं द्वितीयम् ॥ ४२ ॥ वितर्कः श्रुतम् ॥ ४३ ॥ विचारोऽर्थव्यञ्जनयोगसङ्क्रान्तिः ॥ ४४ ॥ सम्यग्दृष्टिश्रावकविरतानन्तवियोजकदर्शनमोहक्षपकोपशमकोपशान्तमोहक्षपकक्षीणमोहजिनाः क्रमशोऽसङ्ख्येयगुणनिर्जराः ॥ ४५ ॥ पुलाकबकुशकुशीलनिर्ग्रन्थस्नातका निर्ग्रन्थाः ॥ ४६ ॥ संयमश्रुतप्रतिसेवनातीर्थलिङ्ग[11]लेश्योपपादस्थानविकल्पतः साध्याः ॥ ४७ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे नवमोऽध्यायः ॥

---

मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् ॥ १ ॥ [12]बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः ॥ २ ॥ [13]औपशमिकादिभव्यत्वानां च ॥ ३ ॥ अन्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः ॥ ४ ॥ तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् ॥ ५ ॥ पूर्वप्रयोगादसङ्गत्वाद्बन्धच्छेदात्तथागतिपरिणामाच्च [14] ॥ ६ ॥

---

[1] शैक्ष्य इति राजवार्तिके श्लोकवार्त्तिके च. शैक्षक इति श्वेताम्बरजैनग्रन्थेषु. [2] समनोज्ञानाम् ॥ २४ ॥ [3] ध्यानम् ॥ २७ ॥ आमुहूर्तात् ॥ २८ ॥ [4] धर्म. [5] आर्तममनोज्ञानाम्. [6] वेदनायाश्च ॥ ३२ ॥ विपरीतं मनोज्ञानाम् ॥ ३३ ॥ [7] धर्ममप्रमत्तसंयतस्य ॥ ३७ ॥ [8] व्युपरतक्रियानिवर्तीनि इति राजवार्त्तिके श्लोकवार्त्तिके च पाठः. [9] तत्त्र्येकयोग. [10] सवितर्के पूर्वे ॥ ४३ ॥ [11] लेश्योपपातस्थानविकल्पतः साध्याः ॥ ४९ ॥ [12] बन्धहेत्वभावनिर्जराभ्याम् ॥ २ ॥ कृत्स्नकर्मक्षयो मोक्षः ॥ ३ ॥ [13] औपशमिकादिभव्य वाऽभावाच्चान्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः ॥ ४ ॥ [14] "तद्गतिः" इत्यधिकं पदमस्ति.

[1] आविद्धकुलालचक्रवद्व्यपगतलेपाऽलाबुवदेरण्डबीजवदग्निशिखावच्च ॥ ७ ॥ धर्मास्तिकायाभावात् ॥ ८ ॥ क्षेत्रकालगतिलिङ्गतीर्थचारित्रप्रत्येकबुद्धबोधितज्ञानावगाहनान्तरसङ्ख्याऽल्पबहुत्वतः साध्याः ॥ ९ ॥

इति तत्त्वार्थाधिगमे मोक्षशास्त्रे दशमोऽध्यायः ॥

---

[1] इदं सूत्र धर्मास्तिकायाऽभावादित्युत्तरसूत्रमपि नास्ति ॥

## परिशिष्टम्—२.

# अध्यायानुक्रमेण तत्त्वार्थाधिगमसूत्रसङ्ख्या—२.

दिगम्बरजैनाम्नायानुसारेण यथा—

| | | | |
|---|---|---|---|
| प्रथमाध्याये | .... | ३३ | सूत्राणि |
| द्वितीयाध्याये | .... | ५३ | ,, |
| तृतीयाध्याये | .... | ३९ | ,, |
| चतुर्थाध्याये | .... | ४२ | ,, |
| पञ्चमाध्याये | .... | ४२ | ,, |
| षष्ठाध्याये | .... | २७ | ,, |
| सप्तमाध्याये | .... | ३९ | ,, |
| अष्टमाध्याये | .... | २६ | ,, |
| नवमाध्याये | .... | ४७ | ,, |
| दशमाध्याये | .... | ९ | ,, |
| | | ३५७ | |

श्वेताम्बरजैनाम्नायानुसारेण यथा—

| | | | |
|---|---|---|---|
| प्रथमाध्याये | .... | ३५ | सूत्राणि |
| द्वितीयाध्याये | .... | ५२ | ,, |
| तृतीयाध्याये | .... | १८ | ,, |
| चतुर्थाध्याये | .... | ५३ | ,, |
| पञ्चमाध्याये | .... | ४४ | ,, |
| षष्ठाध्याये | .... | २६ | ,, |
| सप्तमाध्याये | .... | ३४ | ,, |
| अष्टमाध्याये | .... | २६ | ,, |
| नवमाध्याये | .... | ४९ | ,, |
| दशमाध्याये | .... | ७ | ,, |
| | | ३४४ | |

# परिशिष्टम्—३.

## अथ तत्त्वार्थसुखबोधवृत्तेः सूत्राणामकारादिकोशः


| | सूत्राणि | पृष्ठसङ्ख्या |
|---|---|---|
| १ | अगार्यनगारश्च .... | १६५ |
| २ | अजीवकाया धर्माऽधर्माकाश— | १०० |
| ३ | अणवः स्कन्धाश्च .... | १२४ |
| ४ | अणुव्रतोऽगारी ... | १६६ |
| ५ | अतोऽन्यत्पापम् .... | २०७ |
| ६ | अर्थस्य .... | १५ |
| ७ | अदत्तादानं स्तेयम् .... | १६३ |
| ८ | अधिकरणं जीवाऽजीवाः | १४० |
| ९ | अनशनावमौदर्य— | २१६ |
| १० | अनन्तगुणे परे .... | ४१ |
| ११ | अन्यत्र केवलसम्यक्त्व— | २२८ |
| १२ | अनादिसम्बन्धे च .... | ४२ |
| १३ | अनित्याशरण— .... | २११ |
| १४ | अनुश्रेणि गतिः .... | ३७ |
| १५ | अनुग्रहार्थं स्वस्यातिसर्गो दानम्. | १७८ |
| १६ | अपरा पल्योपममधिकम्. | ९६ |
| १७ | अपरा द्वादशमुहूर्ता— | २०३ |
| १८ | अप्रतिघाते .... | ४१ |
| १९ | अप्रत्यवेक्षिता— .... | १७७ |
| २० | अर्पितानर्पितसिद्धेः .... | १२८ |
| २१ | अल्पारम्भपरिग्रहत्वं— | १४७ |
| २२ | अवग्रहेहावायधारणाः | १३ |
| २३ | अविग्रहा जीवस्य .... | ३७ |
| २४ | अविचारं द्वितीयम् .... | २२२ |
| २५ | असदभिधानमनृतम् | १६२ |
| २६ | असङ्ख्येयाः प्रदेशा— | १०६ |
| २७ | असङ्ख्येयभागादिषु— | ११० |
| २८ | आआकाशादेकद्रव्याणि | १०४ |
| २९ | आकाशस्यानन्ताः .... | १०७ |
| ३० | आकाशस्यावगाहः .... | ११४ |
| ३१ | आचार्योपाध्यायतपस्वि— | २१७ |
| ३२ | आज्ञाऽपायविपाकसंस्थान— | २२० |
| ३३ | आर्तममनोज्ञस्य—.... | २१९ |
| ३४ | आर्तरौद्रधर्म्यशुक्लानि | २१९ |
| ३५ | आद्यं संरम्भसमारम्भारम्भ— | १४० |
| ३६ | आदितस्त्रिषु पीतान्तलेश्याः. | ७९ |
| ३७ | आदितस्तिसृणामन्तरायस्य च— | २०१ |
| ३८ | आद्ये परोक्षम् .... | १२ |
| ३९ | आद्यो ज्ञानदर्शनावरण— | १८९ |
| ४० | आनयनप्रेष्यप्रयोग— | १७५ |
| ४१ | आर्या म्लेच्छाश्च .... | ७० |

| सूत्राणि | | पृष्ठसङ्ख्या |
|---|---|---|
| ४२ | आरणाच्युतादूर्ध्वमेकैकेन— | ९६ |
| ४३ | आलोचनप्रतिक्रमण— | २१६ |
| ४४ | आविद्धकुलालचक्रवत्— | २२८ |
| ४५ | आस्रवनिरोधः संवरः | २०८ |
| ४६ | इन्द्रसामानिकत्रायस्त्रिंश— | ८१ |
| ४७ | इन्द्रियकषायाव्रतक्रियाः | १३८ |
| ४८ | ईर्याभाषैषणादान— | २१० |
| ४९ | उच्चैर्नीचैश्च .... | २०० |
| ५० | उत्तमक्षमामार्दवार्जव— | २११ |
| ५१ | उत्तमसंहननस्यैकाग्र— | २१८ |
| ५२ | उत्तरा दक्षिणतुल्याः.... | ६४ |
| ५३ | उत्पादव्ययध्रौव्ययुक्तं सत्. | १२७ |
| ५४ | उपयोगो लक्षणं .... | ३१ |
| ५५ | उपर्युपरि .... | ८७ |
| ५६ | ऊर्ध्वाधस्तिर्यग्व्यातिक्रम— | १७४ |
| ५७ | ऋजुविपुलमती मनःपर्ययः. | १९ |
| ५८ | एकद्वित्रिपल्योपमस्थितयो— | ६५ |
| ५९ | एकप्रदेशादिषु भाज्यः— | १०९ |
| ६० | एकसमयाऽविग्रहा .... | ३८ |
| ६१ | एकं द्वौ त्रीन्वानाहारकः | ३८ |
| ६२ | एकादश जिने .... | २१३ |
| ६३ | एकादयो भाज्या— | २१५ |
| ६४ | एकादीनि भाज्यानि— | २१ |
| ६५ | एकाश्रये सवितर्कविचारे— | २२२ |
| ६६ | औदारिकवैक्रियिकाहारक— | ४० |
| ६७ | औपपादिकमनुष्येभ्यः— | ९३ |
| ६८ | औपपादिकं वैक्रियिकम् | ४३ |
| ६९ | औपपादिकचरमोत्तम— | ४५ |
| ७० | औपशमिकक्षायिकौ भावौ— | २८ |
| ७१ | औपशमिकादिभव्यत्वानां च. | २२७ |
| ७२ | कन्दर्पकौत्कुच्यमौखर्यासमीक्ष्य— | १७५ |
| ७३ | क्षयोपशमनिमित्तः .... | १८ |
| ७४ | कल्पोपपन्नाः कल्पातीताश्च. | ८७ |
| ७५ | कषायोदयात्तीव्रपरिणाम— | १४५ |
| ७६ | कायवाङ्मनःकर्म योगः | १३५ |
| ७७ | कायप्रवीचारा आऐशानात्. | ८३ |
| ७८ | कालश्च .... | १३२ |
| ७९ | क्रिमिपिपीलिकाभ्रमर— | ३६ |
| ८० | क्षुत्पिपासाशीतोष्ण— | २१२ |
| ८१ | केवलिश्रुतसङ्घधर्म— | १४५ |
| ८२ | क्षेत्रवास्तुहिरण्यसुवर्ण— | १७४ |
| ८३ | क्षेत्रकालगतिलिङ्गतीर्थ | २२९ |

| | सूत्राणि | पृष्ठसङ्ख्या |
|---|---|---|
| ८४ | क्रोधलोभभीरुत्व— | १५५ |
| ८५ | गङ्गासिन्धुरोहिद्रोहितास्या— | ६१ |
| ८६ | गतिकषायलिङ्ग— | ३० |
| ८७ | गतिशरीरपरिग्रहाऽमिमानतो— | ९० |
| ८८ | गतिस्थित्युपग्रहौ— | ११२ |
| ८९ | गतिजातिशरीराङ्गोपाङ्ग— | १९५ |
| ९० | गर्भसम्मूर्छनजमाद्यम् | ४३ |
| ९१ | गुणपर्ययवद्द्रव्यम् .... | १३२ |
| ९२ | गुणसाम्ये सदृशानाम् | १३० |
| ९३ | चक्षुरचक्षुरवधिकेवलानां— | १९१ |
| ९४ | चतुर्दशनदीसहस्रपरिवृता— | ६२ |
| ९५ | चारित्रमोहे नाग्न्याऽरति— | २१४ |
| ९६ | जगत्कायस्वभावौ वा— | १६० |
| ९७ | जम्बूद्वीपलवणोदादयः— | ५० |
| ९८ | जरायुजाण्डजपोतानां गर्भः. | ३९ |
| ९९ | ज्ञानदर्शनदानलाभ— | २९ |
| १०० | ज्ञानदर्शनचारित्रोपचाराः. | २१७ |
| १०१ | ज्ञानाऽज्ञानदर्शनलब्धयश्चतुस्त्रि— | ३० |
| १०२ | ज्ञानावरणे प्रज्ञाऽज्ञाने | २१४ |
| १०३ | जीवभव्याऽभव्यत्वानि च. | ३१ |
| १०४ | जीवाश्च .... | १०२ |
| १०५ | जीवाऽजीवास्रवबन्धसंवर— | ७ |
| १०६ | जीवितमरणाशंसा— | १७८ |
| १०७ | ज्योतिष्काणां च .... | ९८ |
| १०८ | ज्योतिष्काः सूर्याचन्द्रमसौ— | ८५ |
| १०९ | ततश्च निर्जरा .... | २०४ |
| ११० | तत्कृतः कालविभागः | ८६ |
| १११ | तत्प्रमाणे .... | ११ |
| ११२ | तत्प्रदोषनिह्नव— | १४२ |
| ११३ | तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्. | ६ |
| ११४ | तत्स्थैर्यार्थं भावनाः- | १५५ |
| ११५ | तथोत्तराः .... | ६६ |
| ११६ | तदष्टभागोऽपरा .... | ९८ |
| ११७ | तदनन्तभागे मनःपर्ययस्य. | २१ |
| ११८ | तदविरतदेशविरत- | २२० |
| ११९ | तदनन्तरमूर्ध्वं—.... | २२८ |
| १२० | तदादीनि भाज्यानि- | ४२ |
| १२१ | तद्भावाऽव्ययं नित्यम् | १२८ |
| १२२ | तद्भावः परिणामः.... | १३४ |
| १२३ | तदिन्द्रियाऽनिन्द्रियनिमित्तम्. | १३ |
| १२४ | तद्विभाजिनः पूर्वाऽपरायता— | ५८ |

| सूत्राणि | | पृष्ठसङ्ख्या |
|---|---|---|
| १२५ | तद्विगुणद्विगुणा ह्रदाः— | ६० |
| १२६ | तद्विगुणद्विगुणविस्ता- | ६३ |
| १२७ | तद्विपर्ययो नीचैर्वृत्य-नुत्सेकौ— | १५२ |
| १२८ | तद्विपरीतं शुभस्य | १४९ |
| १२९ | तद्विपरीतं मनोज्ञस्य | २९९ |
| १३० | तन्मध्ये मेरुनाभि-वृत्तो— | ५१ |
| १३१ | तन्मध्ये योजनं पुष्करम् | ६० |
| १३२ | तन्निसर्गादधिगमाद्वा | ७ |
| १३३ | तन्निवासिन्यो देव्यः श्रीह्री— | ६१ |
| १३४ | तपसा निर्जरा च ... | २१० |
| १३५ | त्रयस्त्रिंशत्सागरोप-माण्यायुषः. | २०३ |
| १३६ | ताभ्यामपरा भूमयोऽ-वस्थिताः— | ६५ |
| १३७ | तासु त्रिंशत्पञ्चविंश-ति— | ४८ |
| १३८ | त्रायस्त्रिंशलोकपाल-वर्जा— | ८२ |
| १३९ | तिर्यग्योनिजानां च | ७७ |
| १४० | त्रिसप्तनवैकादशत्रयो-दश— | ९५ |
| १४१ | तीव्रमन्दज्ञाताऽज्ञात-भावाधिकरण— | १३९ |
| १४२ | तेष्वेकत्रिसप्तदशसप्त-दश— | ५० |
| १४३ | त्र्येकयोगकाययोगाऽ-योगानाम्. | २२१ |
| १४४ | तैजसमपि .... | ४३ |
| १४५ | दशवर्षसहस्राणि प्रथ-मायाम्. | ९७ |
| १४६ | दशयोजनावगाहः | ६० |
| १४७ | दर्शनविशुद्धिर्विनय-सम्पन्नता— | १४९ |
| १४८ | दर्शनचारित्रमोहनी-याऽकषाय— | १९२ |
| १४९ | दर्शनमोहान्तराययो- | २१४ |
| १५० | दशाष्टपञ्चद्वादश-विकल्पाः— | ८१ |
| १५१ | द्रव्याणि .... | १०१ |
| १५२ | द्रव्याश्रया निर्गुणा गुणाः. | १३३ |
| १५३ | द्व्यधिकादिगुणानां तु | १३० |
| १५४ | द्वयोर्द्वयोः पूर्वाः पूर्व-गाः. | ६२ |
| १५५ | दानलाभभोगोप-....भोग— | २०० |
| १५६ | दिग्देशाऽनर्थदण्ड-विरति— | १६६ |
| १५७ | द्विर्द्विर्विष्कम्भाः पूर्व-पूर्व— | ५१ |
| १५८ | द्विर्धातकीखण्डे .... | ६७ |
| १५९ | द्विनवाष्टादशैक- ....विंशति— | २८ |
| १६० | द्विविधानि .... | ३४ |
| १६१ | द्वीन्द्रियादयस्त्रसाः | ३३ |
| १६२ | दुःखमेव वा .... | १५९ |

| | सूत्राणि | पृष्ठसङ्ख्या |
|---|---|---|
| १६३ | दुःखशोकतापक्रन्दन | १४३ |
| १६४ | देवनारकाणामुपपादः | ४० |
| १६५ | देवाश्चतुर्निकायाः .... | ७९ |
| १६६ | देशसर्वतोऽणुमहती | १५४ |
| १६७ | धर्मास्तिकायाऽभावात्. | २२९ |
| १६८ | धर्माऽधर्मयोः कृत्स्ने | १०९ |
| १६९ | न चक्षुरनिन्द्रियाभ्याम् . | १६ |
| १७० | न जघन्यगुणानाम् | १२९ |
| १७१ | न देवाः .... | ४४ |
| १७२ | नवचतुर्दशपञ्चद्वि— | २१६ |
| १७३ | नाणोः .... | १०८ |
| १७४ | नामप्रत्ययाः सर्वतो— | २०६ |
| १७५ | नामस्थापनाद्रव्यभावतस्तन्न्यासः. | ८ |
| १७६ | नामगोत्रयोरष्टौ .... | २०३ |
| १७७ | नारकतैर्यग्योनमानुष | १५५ |
| १७८ | नारकसम्मूर्छिनो नपुंसकानि. | ४४ |
| १७९ | नारका नित्याऽशुभतरलेश्या— | ४९ |
| १८० | नारकाणां च द्वितीयादिषु. | ९७ |
| १८१ | नित्यावस्थितान्य-....रूपाणि. | १०३ |
| १८२ | निदानं च .... | २२० |
| १८३ | निर्देशस्वामित्वसाधनाधिकरण— | ९ |
| १८४ | निरुपभोगमन्त्यम् | ४२ |
| १८५ | निर्वर्तनानिक्षेपसंयोगनिसर्गा— | १४१ |
| १८६ | निर्वृत्त्युपकरणे द्रव्येन्द्रियम् . | ३४ |
| १८७ | निःशल्यो व्रती .... | १६५ |
| १८८ | निश्शीलव्रतत्वं च सर्वेषाम् . | १४७ |
| १८९ | निष्क्रियाणि च .... | १०५ |
| १९० | नृस्थिती परावरे—— | ७१ |
| १९१ | नैगमसङ्ग्रहव्यवहारर्जुसूत्र— | २३ |
| १९२ | पञ्चनवद्व्यष्टाविंशति- | १९० |
| १९३ | पञ्चेन्द्रियाणि .... | ३३ |
| १९४ | पद्ममहापद्मतिगिञ्छकेसरि— | ५९ |
| १९५ | परविवाहकरणेत्वरिका— | १७३ |
| १९६ | परतः परतः पूर्वा— | ९६ |
| १९७ | परस्परोपग्रहो जीवानाम् . | ११८ |
| १९८ | परस्परोदीरितदुःखाः | ४९ |
| १९९ | परं परं सूक्ष्मम् .... | ४० |
| १०० | परा पल्योपममधिकम्. | ९८ |
| २०१ | परात्मनिन्दाप्रशंसे— | १५१ |
| २०२ | परे केवलिनः .... | २२१ |
| २०३ | परेऽप्रवीचाराः .... | ८४ |

| | सूत्राणि | पृष्ठसङ्ख्या |
|---|---|---|
| २०४ | परे मोक्षहेतू .... | २१९ |
| २०५ | प्रकृतिस्थित्यनुभव- | १८८ |
| २०६ | प्रत्यक्षमन्यत् .... | १२ |
| २०७ | प्रथमो योजनसहस्रायाम— | ६० |
| २०८ | प्रदेशसंहारविसर्पाभ्याम्— | १११ |
| २०९ | प्रदेशतोऽसङ्ख्येयगुणम्— | ४१ |
| २१० | प्रमत्तयोगात्प्राणव्यपरोपणम्— | १६१ |
| २११ | प्रमाणनयैरधिगमः | ९ |
| २१२ | प्राग्ग्रैवेयकेभ्यः कल्पाः | ९१ |
| २१३ | प्राङ्मानुषोत्तरान्मनुष्याः | ६९ |
| २१४ | प्रायश्चित्तविनयवैयावृत्य— | २१६ |
| २१५ | पीतपद्मशुक्ललेश्या— | ९० |
| २१६ | पुलाकबकुशकुशील— | २२४ |
| २१७ | पुष्करार्धे च .... | ६८ |
| २१८ | पूर्वप्रयोगादसङ्गत्वाद्बन्धच्छेदात्--- | २२८ |
| २१९ | पूर्वयोर्द्वीन्द्राः .... | ८२ |
| २२० | पृथक्त्वैकत्ववितर्क— | २२१ |
| २२१ | पृथिव्यप्तेजोवायुवनस्पतयः— | ३३ |
| २२२ | बन्धहेत्वभावनिर्जराभ्यां-- | २२७ |
| २२३ | बन्धवधच्छेदातिभारारोपणान्नपान— | १७१ |
| २२४ | बन्धेऽधिकौ पारिणामिकौ. | १३१ |
| २२५ | बह्वारम्भपरिग्रहत्वं— | १४६ |
| २२६ | बहिरवस्थिताः .... | ८६ |
| २२७ | बहुबहुविधक्षिप्रानिःसृतानुक्त— | १४ |
| २२८ | ब्रह्मलोकालया लौकान्तिकाः. | ९२ |
| २२९ | बादरसाम्पराये सर्वे | २१३ |
| २३० | बाह्याभ्यन्तरोपध्योः | २१८ |
| २३१ | भरतस्य विष्कम्भो जम्बूद्वीपस्य— | ६६ |
| २३२ | भरतैरावतयोर्वृद्धिह्रासौ-- | ६४ |
| २३३ | भरतहैमवतहरिविदेह | ५२ |
| २३४ | भरतैरावतविदेहाः— | ७० |
| २३५ | भरतः षड्विंशति पञ्चयोजनशत — | ६३ |
| २३६ | भवनवासिनोऽसुरनाग | ८४ |
| २३७ | भवप्रत्ययोऽवधिर्देव— | १८ |
| २३८ | भवनेषु च | ९८ |
| २३९ | भूतव्रत्यनुकम्पादान— | १४४ |
| २४० | भेदसङ्घाताभ्यां चाक्षुषः | १२६ |
| २४१ | भेदसङ्घातेभ्य उत्पद्यन्ते | १२५ |
| २४२ | भेदादणुः ... | १२४ |
| २४३ | मणिविचित्रपार्श्वा उपरि मूले च— | ५९ |
| २४४ | मतिश्रुतावधयो विपर्ययश्च. | २३ |

| | सूत्राणि | पृष्ठसङ्ख्या |
|---|---|---|
| २४५ | मतिश्रुतयोर्निबन्धो— | २० |
| २४६ | मतिश्रुताऽवधिमनःपर्ययकेवलानि ज्ञानम्. | ११ |
| २४७ | मतिश्रुतावधिमनःपर्ययकेवलानां. | १९० |
| २४८ | मतिः स्मृतिः संज्ञा चिन्ता— | १२ |
| २४९ | मनोज्ञाऽमनोज्ञेन्द्रियविषय— | १५७ |
| २५० | मार्गाऽच्यवननिर्जरार्थम्. | २१२ |
| २५१ | माया तैर्यग्योनस्य ... | १४६ |
| २५२ | मारणान्तिकीं सल्लेखनाम्— | १६९ |
| २५३ | मिथ्यादर्शनाविरतिप्रमाद— | १८३ |
| २५४ | मिथ्योपदेशरहोऽभ्याख्यान— | १७२ |
| २५५ | मूर्छा परिग्रहः .... | १६४ |
| २५६ | मेरुप्रदक्षिणा नित्यगतयो— | ८५ |
| २५७ | मैत्रीप्रमोदकारुण्य— | १५९ |
| २५८ | मैथुनमब्रह्म .... | १६४ |
| २५९ | मोहक्षयाज्ज्ञानदर्शनावरण— | २२७ |
| २६० | योगवक्रताविसंवादनं— | १४९ |
| १६१ | योगदुष्प्रणिधानानादर— | १७६ |

| | सूत्राणि | पृष्ठसङ्ख्या |
|---|---|---|
| २६२ | रत्नशर्करावालुकापङ्कधूम— | ४७ |
| २६३ | रूपिणः पुद्गलाः ... | १०३ |
| २६४ | रूपिष्ववधेः .... | २१ |
| २६५ | लब्धिप्रत्ययं च .... | ४३ |
| २६६ | लब्ध्युपयोगौ भावेन्द्रियम्, | ३४ |
| २६७ | लोकाकाशेऽवगाहः | १०९ |
| २६८ | लौकान्तिकानामष्टौ | ९९ |
| २६९ | वर्तनापरिणामक्रियाः | ११९ |
| २७० | वनस्पत्यन्तानामेकम् | ३५ |
| २७१ | व्रतशीलेषु पञ्च पञ्च | १७१ |
| २७२ | व्यञ्जनस्याऽवग्रहः | १५ |
| २७३ | व्यन्तराः किंनरकिंपुरुष— | ८४ |
| २७४ | व्यन्तराणां च .... | ९८ |
| २७५ | वाङ्मनोगुप्तीर्यादान— | १५५ |
| २७६ | वाचनापृच्छनानुप्रेक्षाम्नाय— | २१७ |
| २७७ | विग्रहगतौ कर्मयोगः | ३६ |
| २७८ | विग्रहवती च संसारिणः— | ३७ |
| २७९ | विघ्नकरणमन्तरायस्य | १५२ |
| २८० | विचारोऽर्थव्यञ्जनयोग— | २२२ |
| २८१ | विजयादिषु द्विचरमाः | ९२ |
| २८२ | वितर्कः श्रुतम् .... | २२२ |
| २८३ | विदेहेषु सङ्ख्येयकालाः | ६६ |

| | सूत्राणि | पृष्ठसङ्ख्या |
|---|---|---|
| २८४ | विधिद्रव्यदातृपात्रवि-शेषात्तद्विशेषः | १७९ |
| २८५ | विपाकोऽनुभवः .... | २०४ |
| २८६ | विंशतिर्नामगोत्रयोः | २०२ |
| २८७ | विशुद्धिक्षेत्रस्वामिवि-षयेभ्यो — | २० |
| २८८ | विशुध्यप्रतिपाताभ्यां | १९ |
| २८९ | वेदनायाश्च .... | २१९ |
| २९० | वेदनीये शेषाः .... | २१४ |
| २९१ | वैमानिकाः .... | ८६ |
| २९२ | शङ्काकांक्षाविचिकि-त्सान्यदृष्टिप्रशंसा— | १७० |
| २९३ | शब्दबन्धसौक्ष्म्य-स्थौल्य— | १२२ |
| २९४ | शरीरवाङ्मनःप्राणा- | ११५ |
| २९५ | शुक्ले चाद्ये पूर्वविदः | २२१ |
| २९६ | शुभं विशुद्धमव्या-घाति— | ४३ |
| २९७ | शुभः पुण्यस्याऽशुभः— | १३६ |
| २९८ | श्रुतं मतिपूर्वं द्व्यनेक— | १६ |
| २९९ | श्रुतमनिन्द्रियस्य .... | ३५ |
| ३०० | शून्यागारविमोचिता-वास— | १५६ |
| ३०१ | शेषाणां सम्मूर्छनम् | ४० |
| ३०२ | शेषाणामन्तर्मुहूर्ता | २०३ |
| ३०३ | शेषाः स्पर्शरूपशब्द— | ८३ |
| ३०४ | शेषास्त्वपरगाः .... | ६२ |
| ३०५ | शेषास्त्रिवेदाः .... | ४४ |
| ३०६ | स आस्रवः .... | १३६ |
| ३०७ | सकषायाऽकषाययोः | १३७ |
| ३०८ | सकषायत्वाज्जीवः कर्मणो— | १८६ |
| ३०९ | सचित्तसम्बन्धस-म्मिश्राऽभिषव— | १७७ |
| ३१० | सचित्तनिक्षेपाऽपि-धान— | १७८ |
| ३११ | सचित्तशीतसंवृताः सेतरा— | ३९ |
| ३१२ | स गुप्तिसमितिधर्मा-नुप्रेक्षा— | २०९ |
| ३१३ | सत्सङ्ख्याक्षेत्रस्पर्शन-कालान्तर— | १० |
| ३१४ | सदसतोरविशेषाद्य-दृच्छोपलब्धे— | २२ |
| ३१५ | सदसद्वेद्ये .... | १९२ |
| ३१६ | सद्द्रव्यलक्षणम् ... | १२७ |
| ३१७ | स द्विविधोऽष्टचतुर्भेदः | ३१ |
| ३१८ | सद्वेद्यशुभायुर्नाम- | २०६ |
| ३१९ | सप्ततिर्मोहनीयस्य | २०२ |
| ३२० | समनस्काऽमनस्काः | ३२ |
| ३२१ | सम्यक्त्वं च .... | १४८ |
| ३२२ | सम्यक्त्वचारित्रे .... | २९ |
| ३२३ | सम्यग्योगनिग्रहो गुप्तिः. | २१० |
| ३२४ | सम्यग्दर्शनज्ञानचारि-त्राणि — | १ |
| ३२५ | सम्यग्दृष्टिश्रावकविर-तानन्त— | २२३ |

| | सूत्राणि | पृष्ठसङ्ख्या |
|---|---|---|
| ३२६ | स यथानाम ... | २०४ |
| ३२७ | संयमश्रुतप्रतिसेवना-तीर्थ— | २२४ |
| ३२८ | सरागसंयमसंयमासं-यम— | १४८ |
| ३२९ | सर्वद्रव्यपर्यायेषु— | २१ |
| ३३० | सर्वस्य ... | ४२ |
| ३३१ | संख्येयाऽसङ्ख्येयाश्च— | १०८ |
| ३३२ | संज्ञिनः समनस्काः | ३६ |
| ३३३ | सम्मूर्छनगर्भोपपादा — | ३८ |
| ३३४ | संक्लिष्टासुरोदीरितदुः-खाश्च— | ५० |
| ३३५ | संसारिणस्त्रसस्थावराः | ३२ |
| ३३६ | संसारिणो मुक्ताश्च .... | ३२ |
| ३३७ | स्पर्शरसगन्धवर्ण-वन्तः— | १२१ |
| ३३८ | स्पर्शरसगन्धवर्णश-ब्दास्तदर्थाः. | ३४ |
| ३३९ | स्पर्शनरसनघ्राणचक्षुः-श्रोत्राणि. | ३४ |
| ३४० | स्वभावमार्दवं च ... | १४७ |
| ४४१ | सानत्कुमारमाहेन्द्रयोः सप्त. | ९४ |
| ३४२ | सामायिकच्छेदोप-स्थापना— | २१५ |
| ३४३ | सारस्वतादित्यवह्न्यरु-णगर्दतोय— | ९२ |
| ३४४ | स्निग्धरूक्षत्वाद्बन्धः | १२९ |
| ३४५ | स्थितिरसुरनागसुपर्ण-द्वीप— | ९३ |
| ३४६ | स्थितिप्रभावसुखद्युति | ८९ |
| ३४७ | स्त्रीरागकथाश्रवण— | १५६ |
| ३४८ | सुखदुःखजीवितमर-णोपग्रहश्च. | ११७ |
| ३४९ | सूक्ष्मसाम्परायच्छद्म-स्थवीतरागयो— | २१३ |
| ३५० | स्तेनप्रयोगतदाहृता-दान— | १७२ |
| ३५१ | सोऽनन्तसमयः ... | १३३ |
| ३५२ | सौधर्मैशानयोः साग-रोपमे— | ९४ |
| ३५२ | सौधर्मैशानसानत्कु-मार— | ८७ |
| ३४४ | हिंसानृतस्तेयाब्रह्म | १५४ |
| ३५५ | हिंसानृतस्तेयविषय-संरक्षणेभ्यो — | २२० |
| ३५६ | हिंसादिष्विहाऽमुत्रापा याऽवद्य— | १५८ |
| ३५७ | हेमार्जुनतपनीयवैडूर्य— | ५९ |


इति सूत्राणामकारादिकोशः.

WD 2513—GBPM—750—19-1-44.